॥ श्रीः ॥

महाकवि-श्रीमदम्बिकादत्त-व्यास-विरचित

# शिवराज-विजयः

(ऐतिहासिक उपन्यासः)

•

## तृतीयो विरामः

( आनवमाद् द्वादशनिश्वासात्मक )

•

व्याकरण-साहित्य-मीमासाद्याचार्येण

( स्व० ) पं० श्रीरामजीपाण्डेयशास्त्रिणा

विरचितया वैजयन्त्या

काशिकहिन्दूविश्वविद्यालये

सस्कृतपालिविभागे प्राध्यापकेन

श्री श्रीनारायणमिश्रेण

राष्ट्रभाषानुवादेन च विभूषित

॥ श्री ॥

# निर्माणहेतुः

"गद्यं कवीनां निकषं वदन्ति"

श्लोके एकस्याप्यंशस्य चमत्कार-विशेषाधायकत्वे सर्वोऽपि श्लोकः प्रशस्यते, न च गद्ये तथा सुलभं सौष्ठवम्। गद्ये तु सर्वाङ्गीण-सौन्दर्यमुपलभ्येत चेत्, तदैव तत् प्रशंसा-भाजनं भवेद् भव्यानाम्। पद्ये छन्दःपारवश्यात् स्वच्छन्द-पद-प्रयोगो न भवतीत्यनिच्छताऽपि कविता-प्रसङ्ग-प्राप्तं स्वाभाविकं स्वल्पमपि वचनीयं क्वचिद् विस्तार्यते, क्वचिद् वह्वपि नियताक्षरैः संक्षिप्य क्षोदिष्ठं विधीयते, क्वचिच्च छिन्न-स्वाभाविक-पद-प्रयोग-समापनीयान्यपि पारस्परिकालाप-संसक्त-प्राप्त-वाक्यानि जटिलीक्रियन्ते। गद्ये तु यदि किमपि तादृशमस्वाभाविकं स्यात्, तत् कवेरेव निर्वक्ति महदवद्यम्—इत्यादिकारणैः पद्यापेक्षया गद्यमेव महामान्यं भवति, भवति च दुष्करमपि गद्यकाव्यमेव। अत एव शुद्ध-पद्यात्मकेषु बहुषु महाकाव्येष्वपि खण्डकाव्येष्वपि च प्राप्येष्वपि गद्यपद्यात्मकेषु चम्पू-नाटकादिषु चानेकेषूपलभ्यमानेष्वपि, शुद्ध-गद्य-काव्यानि तथा नाऽऽसाद्यन्ते। अस्माकं महामान्या धन्याः सुबन्धु-बाण-दण्डिनो महाकवयो ये वासवदत्ता-कादम्बरी-दशकुमारचरितानि सुधामधुराणि सदा सदनुभव्यानि गद्यकाव्यानि विरचय्य भारत-वर्षं सबहु-प्रमोद-वर्षं व्यधिषत, येषां चोक्ति-पर्य्यालोचन-प्राप्त-पर्याप्तव्युत्पत्तयोऽसङ्ख्याश्छात्रा अद्यापि वर्तन्ते, वर्तिष्यन्ते च चिराय। पूर्वैर्भट्टार-हरिश्चन्द्र-प्रभृतिभिरेतैर्महाकविभिश्च प्रचारि-

तोऽपि महाकाव्य-सचारो न चिराय स्थितिमकलयत् । भारताभिजन-भाषाकविभिरपि च प्राय पद्य-प्रकृतकैरेव समभावि—इति जगत्प्रसिद्धे सूरदास-प्रभृतिभिरपि पद्यान्यव निवद्धानि । साम्प्रतन्तु समय-महिम्ना भारतीय-वर्तमान-भाषासु वहुधा गद्यकाव्यानि विरच्यन्ते । वङ्ग-गुजरादि-भाषासूपन्यासरव व्याप्ता विपणय । हिन्दीभाषाऽपि च प्रत्यहमतिशयमासादयन्ति गद्यसोपानेष्वेव पदाधाने। पर न कवल प्राकृतिक-गिरा गुरवो गीर्वाणगिरि व्युत्पत्तिगरीयास उपलभ्यन्त, न वा कश्चिद् धन्य-धन्यान् विहाय सस्कृतसाहित्य-व्युत्पन्ना इव इतर-भाषानुरक्ता विशषतोऽवलोक्यन्ते। अत एव भारताभिजन-भाषा-कवय प्राय स्वभ्रमान् साक्षात् सस्कृतसाहाय्येन शार्वायतु न पारयन्ति, न वा भाषाकविसमादृतान् नवान् नवान् मनोरमान् चमत्कारविशेषाधायकान् पथोऽनुसर्तु सस्कृत-साहित्य-वभवेषु च निधीन् वद्धयितु सस्कृतज्ञा एव प्रायश पारयन्ति। कदाचित् वृन्दारक-वृन्द-वाण्या गद्यकाव्य-प्रचार-दौर्बल्यस्येदमेव प्रधान कारण स्यात् । महादिदमुपहासास्पद विडम्बन यत् मण्डूक इव महापारावार-पारमासादयितु यतमानस्तादृश कवि-कौशल-निकषायित गद्यकाव्य मादृक्ष क्षोदीयान् जनो रिरचयिषु सवृत्त इति। काव्यमिद मा स्म भूत् तादृग्भाव-विघट्टकम्, मा स्म वा पुषत् कस्यापि मोद-विशेषम्, पर मया तु सनातनधर्म-धूर्वह-शिवराज-वर्णनेन रसना पावितैव । प्रसङ्गत सदुपदेश-निर्देशै स्व-ब्राह्मण्य सफलितमेव, ऐतिहासिक-काव्यरुचीनि स्वमित्राणि रञ्जितान्येव, चिरमस्मत्पूर्वजै पराशर-पाराशरादिभिरुपासित्रा सस्कृतभाषा सेवितैव, चक्षुषी निमील्य

सविशेष साक्षात्कृता पीयूष-पूर-पूर्णमिव दृक्पातैरुज्जीवयन्ती पारिजात-कुसुम-वर्षिभिरिव वचनैरुपादिशन्ती जननी सरस्वती ममाराधितैव, सद्य परनिर्वृतिश्च समासादितैव । भवभूतिजगन्नाथादीना राजमान्याना कवि-मण्डल-चक्रवर्तिनान्तु द्वेषविशेषैर्वा स्वग्रन्थ-मार्मिकजनालाभेन वा कारणान्तर-कलापैर्वा महानेव शोक-सङ्घात आसीत् । "कोऽस्मद्ग्रन्थानवलोकयिष्यति ? को वाऽस्माक गूढ-तात्पर्य भोत्स्यति ?" इति चिन्ता-सन्तान-वितान-झञ्झावातोद्धूत-सशय-घनघनाडम्बर एव तथा ममरौत्सीद् हृदयाकाशम्, यथा ध्रुव सद्य परनिर्वृतिरूप-चन्द्रिका-प्रसारेणापि न रञ्जितमेव तदन्त-करणकुमुद-वनम् ।

तथा च तैरेवोक्तम्—

"ये नाम केचिदिह न' प्रथयन्त्यवज्ञा
जानन्ति ते किमपि तान् प्रति नैष यत्न ।
उत्पस्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्यय निरवधिर्विपुला च पृथ्वी ॥"

"विद्वासो वसुधातले परवच श्लाघासु वाचयमा
भूपाला कमलाविलासमदिरोन्मीलन्मदाघूर्णिता ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधर-माधुरी विधुरयन् वाचा विलासो मम ॥"

अहन्तु तादृक्षाणा महाकवीना चरण-रजो-विमर्श-भाजनमपि तदपेक्षयाऽधिक भाग्यवत्तरोऽस्मीति निश्चिनोमि, यतो मद्ग्रन्थ-मार्मिकस्तु मिथिला-मही-महेन्द्र, भारत-साम्राज्य-व्यवस्थापक-समाज-सजीवन, महामान्य, वदान्य, धन्य-धन्य, विविध-

विरुदावली–विराजमान, राजमानोन्नत, ननोन्ननिदायक, महाराजश्रीरमेश्वरसिंहवीश्वर एवास्मि । मान्यन्ति च परश्शता वाराणस्यादि-पण्डित–मण्डल-मण्डना रसास्वादानुकूल–वासना–वासितान्त करणा विबुध–जना ।

सोऽय स्वलेखनी–कण्डूमुपशमयितु लिखित लेखप्रकाण्डो यदि केषाञ्चित् पण्डित–प्रकाण्डाना कर्ण–कण्डू खण्डयेत्, तत् कृतकृत्य सवर्त्तेय । ये तु पुमोभागिनो निर्गीर्यापि प्रबन्धममु तुण्ड–मुण्ड-गण्ड-कण्डूयनै, ताण्डव–करण्डीकृत–भ्रू भङ्गैश्चास्मानास्माकाश्च हासयिष्यन्ति, तेऽप्यसङ्कुच-प्रणति–पात्राण्येवास्माकम् । ये तु जोष जोषमालोक्यापि काव्यानि, समासाद्यापि च तोपम्, सरोषमुज्जृम्भिताभिर्जाठरज्वालाभिरेव त जारयन्ति, जारयन्ति ते ग्राव्णोऽपि लौहमपि विषमपि दाधीचास्थीन्यपि चेति विलक्षण–कुक्षयस्ते न कस्य नमस्या ?

अम्बिकादत्तव्यास ।

विरुदावली-विराजमान, गजमानोन्नत, नतोन्नतिदायक, महाराजश्रीरमेश्वरसिंहवीरेश्वर एवास्ति। मन्यन्ति च परश्शता वाराणस्यादि-पण्डित-मण्डल-मण्डना रसास्वादानुकूल-वासना-वासितान्तःकरणा विबुध-जना।

सोऽयं स्वलेखनी-कण्डूमुपशमयितु लिखित लेखप्रकाण्डो यदि केषाञ्चित् पण्डित-प्रकाण्डाना कर्ण-कण्डू खण्डयेत्, तत् कृतकृत्य भवेत्तय। ये तु पुरोभागिनो निगीर्यापि प्रबन्धममु तुण्ड-मुण्ड-गण्ड-कण्डूयनै, ताण्डव-करण्डीकृत-भ्रू भङ्गैश्चास्मानास्माकाश्च हासयिष्यन्ति, तेऽप्यसङ्कुच-प्रणति-पात्राण्येवास्माकम्। ये तु जोष जोषमालोक्यापि काव्यानि, समासाद्यापि च तोषम्, सरोषमुज्जृम्भिताभिर्जठरज्वालाभिरेव त जारयन्ति, जारयन्ति ते ग्राव्णोऽपि लौहमपि विषमपि दाधीचास्थीन्यपि चेति विलक्षण-कुक्षयस्ते न कस्य नमस्या ?

अम्बिकादत्तव्यास।

॥ श्री ॥

महाकवि-श्रीमदम्बिकादत्त-व्यास-विरचित

# शिवराजविजयः

## अथ तृतीयो विरामः

"दैवी विचित्रा गति" —स्फुटकम्

**येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत ।**
**कुटजे खलु तेनेहा तेने हा ! मधुकरेण कथम् ? ॥**

—जगन्नाथ

---

या सत्त्वैकगुणाश्रया भगवती वाणीति सम्बोधिता
लीना राजसमहतौ सुरवरैर्लक्ष्मीति चाभ्यर्थिता ।
या कालीति तमोगुणा मधुमदोन्मादे चिरादर्चिता
सेयं काचिदनूतनाऽपि युवती बोभूयतां भूतये ॥ १ ॥

नवमे निश्वासे वृद्धिं गच्छत शिववीरमहिम्न प्रवलबलसमवेतचल-समवेतजयपुरन्दरजयसिंहमहाराजतोऽवरोध विवर्णयिपुस्तन्मूलाच्चाग्रे भाविनी दिल्लीवल्लभाधीनतामाशङ्कमानस्तदुभयमुपक्षिपति पद्यखण्डेन पण्डितराजीयेन पद्येन च । दैवी—देवसम्बन्धिनी, अदृष्टाधीना वा ।

येन—मधुकरेण, अमन्दमरन्दे—प्रचुरमकरन्दे, दलदरविन्दे—विकसत्पद्मे, दिनानि—सुखमयानि रसानुसेवनपराणि, अनायिषत—व्यतियापितानि । हा ! कष्टम्, खलु—निश्चितम्, तेन, न तु परेण, कुटजे—पार्वतमल्लिकायाम्, ईहा—इच्छा अपि, कथम्—केन प्रकारेण, तेने—विवृद्धिं नीता । धीरधीरस्वभावेन परमोदात्तेन नायकेन श्रीशिववीरेण जयसिंह-

---

"भाग्य की गति विचित्र होती है !"

"हाय ! पराग से ओत-प्रोत एवम् विकसित कमलिनी के बीच ही अपना सारा जीवन व्यतीत करने वाले मधुकर ने आज कुटजपुष्पों के बीच रहने की इच्छा क्यों की ?"

—ज०

मकरन्द-बिन्दु-सन्दोहैरार्द्रः प्रफुल्ललता-लिङ्गनैः शीतः कुञ्जसंश्लेषैश्च धीरः समीरः प्रवहति स्म। दुःशकुन-रूपत्वादागामि-भय-सूचकेऽपि वसन्तप्रायत्वात् सुखमयेऽस्मिन् समये तोरणद्वारादवहूरं पूर्वस्याः कुसुमवाटिकायाः स्वयं महाराष्ट्रराज एकाकी पर्यटति स्म।

तत्र च भ्रमद्भ्रमरैश्चोचुम्ब्यमाना मल्लिकाः पश्यन् दोदुल्यमानैः कर-पल्लवैरिव पल्लव-तल्लजैः पार्श्व-परिवर्ति-द्रुमान् स्पृशतीर्वासन्ती-

-काणाम्—वह्नि-दग्धकाष्ठखण्डानाम्, कदम्बमिव-समूहमिव। वासन्ताजनपु दाव-दहनत्वमारोपितं, तदीयधामेषु ज्वलदङ्गारत्वनिमित्तमिति विशेषशोभाधायकत्वम्। पाटलपटलम्—पाटलासमूहः। पाटलम् "गुलाबफूल" इति भाषाप्रसिद्धम्। पुष्पपरागैः—कुसुमरजोभिः। पीतः—पीतवर्णः। मकरन्द-बिन्दु-सन्दोहैः—पुष्परसपृषत्समूहैः, आर्द्रः—क्लिन्नः, प्रफुल्लतालिङ्गनैः—विकसितव्रततिसमाश्लेषैः, शीतः—शीतलः, कुञ्जसंश्लेषैः—निकुञ्ज-सम्पर्कैः, धीरः—मन्दगतिः, समीरः—वायुः, प्रवहति स्म—चरति स्म। दुःशकुनरूपत्वात्— असामयिकत्वेन दुःशकुनत्वम्। आगामिभयस्य—भाविभीतेः निग्रहात्मकानिष्टस्य, सूचके—बोधके, सुखमये—आपातरमणीये, अवहूरम्—अन्तिकम्। "दूरान्तिकार्थेभ्यश्च" इति द्वितीया। पर्यटति स्म—विहरति स्म।

भ्रमद्भ्रमरैः—सञ्चलद्द्विरेफैः, चोचुम्ब्यमानाः—समाश्लिष्यमाणाः, मल्लिकाः—मालतीः। दोदुल्यमानैः—उत्क्षिपद्भिः, करपल्लवैरिव-हस्तकिसलयैरिव, पल्लवतल्लजैः—प्रशस्तैः किसलयैः, पार्श्वपरिवर्तिनः—समीपस्थान्

सन्तप्त, परम श्रान्त तथा शून्य हृदय वालों का मानो-सी ज्वालाओं से विभूषित दावानल से प्रज्वलित अंगारों के समूह की तरह लाल गुलाब के फूल खिले हुए थे। पराग के सम्पर्क से पीला, पुष्परस की बिन्दुओं के समूह से भीगा हुआ, प्रफुल्लित लताओं के आलिङ्गन से शीतल तथा कुञ्जों के सम्पर्क से धीर समीर (वायु) वह रहा था। असामयिक और इसीलिए अपशकुन होने के कारण आगामी भय के सूचक होने पर भी वसन्तऋतु जैसे मनोरम दृश्य को प्रस्तुत करने से आपाततः रमणीय समय में प्रवेश-द्वार के समीप पूर्व दिशा में लगाई वाटिका में महाराष्ट्रराज अकेले घूम रहे थे।

उस पुष्पवाटिका में घूमते समय चञ्चल भौंरों से पुनः पुनः कम्पित होने वाले मालती-पुष्पों को देखते हुए, कर-पल्लव के समान हिलते पल्लवों से पास

रवलोकयन्, पुस्कोकिल-काकली-प्रतिवचनानीव कोकिल-कलरव-कुहूकारानाकर्णयन् अहरह "जय महाराष्ट्रराज !" इति साम्रेडमाकर्णनेन विहित-तदनुकरण-विरावाभ्यामा सारिका विभावयन्, अकस्मात् परस्पर-ग्रथित कुसुम-भार-निविड मिलिन्द-व्याप्त लता-प्रतान-निचय हस्ताभ्यामुभयतोऽपसार्य निविशमानाम्, अष्टादशवर्ष-देशीयाम्, धारित-हारित-परिधानाम्, कण्टकाकर्ष-श्लथद्वसन-दरीदृश्य-मानमीषदुन्मिषितमुरोजयुगलमञ्चलेनाऽऽच्छादयितु यतमानाम्, प्रफुल्ल-

द्रुमान्—वृक्षान्, स्पृशती—आश्लिष्यती, वासन्ती—माधवीलता । पुस्कोकिल-काकलीप्रतिवचनानीव—पिकोक्तिप्रत्युक्तीरिव, कोकिल—कलरव-कुहूकारान्—पिकमधुरोक्तिकुहूरवान्, आकर्णयन्—शृण्वन् । अहरह—प्रतिदिनम्, विहित-तदनुकरण-विरावाभ्यासा—कृततद्विडम्बनशब्दावृत्ती, सारिका—शारिका, विभावयन्-अवलोकयन्। परस्परग्रथितम्—अन्योन्यससक्तम्,कुसुम-भारनिबिडम्—पुष्पभरघनम्, मिलिन्दव्याप्तम्—द्विरेफयुक्तम्, लताप्रताननि-चयम्—व्रततिविस्तृतिसमूहम्, अपसार्य—दूरीकृत्य, निविशमानाम्—प्रविश-न्तीम् । अष्टादशवर्षदेशीयाम्—प्रायोऽष्टादश-वर्षवयस्काम्, धारित-हारित-परिधानाम्—परिहितहरिद्वर्णवसनाम्, कण्टकानाम आकर्षेण—आकृष्टचा, श्लथत—पतमानात्,वसनात्—वासस ,दरीदृश्यमानम्—भृशम् अवलोक्यमानम्। ईषदुन्मिषितम्—किञ्चिदुन्नतम्, उरोजयुगलम्—कुचद्वन्द्वम् अञ्चलेन—वसन-कोणेन, आच्छादयितुम्—गोपयितुम्, यतमानाम्—यत्नमादधतीम् । प्रफुल्ल—

के वृक्षो का स्पश करती हुई वासन्ती लता का अवलोकन करते हुए, कोकिल-काकली ( मधुरध्वनि ) के प्रतिवचन की तरह कोयल की कूक को सुनते हुए, प्रतिदिन "महाराष्ट्रराज की जय हो, महाराष्ट्रराज की जय हो" इस जयध्वनि के पुन पुन सुनने के कारण उस ( जयध्वनि ) के अनुकरण करने के लिए बार-बार उसी तरह का शब्द करने वाली सारिकाओ का निरीक्षण करते हुए महाराष्ट्रराज ने परस्पर-ससक्त फूलो के भार से घनी ( लदी हुई ) और भौरो से परिपूर्ण लताओ के कुञ्ज को दोनो हाथो से हटाकर घुसती हुई, करीब-करीब अठारह साल की, हरे रङ्ग की साडी पहनी हुई, कॉटो मे फँस जाने के कारण साडी के नीचे खिसक जाने से अन्य व्यक्तियो द्वारा देखे जाने योग्य अपने नव-विकसित स्तन-युगल को अञ्चल से ढकने मे व्यस्त, खिले कमल के

कमल-भ्रमेणेव वदनमभिपततो मधुकरान् ससम्भ्रम सभ्रूभङ्गमीक्षमाणाम्, कपोल-पालि-लग्न-पराग-रागेण होलिका-महोत्सव-नेपथ्येनेवावतरन्तीम्, मल्ली-वल्ली-सङ्घर्षोन्मथितेनाधररागेणाधिकमधिक तर्षमिव जनयन्तीम्, शुक-शावक-रावानुकारि-मञ्जु-मन्द-शिञ्जिताम्, गृहीत-कुसुम-स्तबका कामपि यवन-कामिनीमद्राक्षीत् ।

सा तु दृष्ट्वैव महाराष्ट्रराज दक्षकरमुत्थाप्य शिरो नमयित्वा स्र समान-वसन-दर्शित-ताटङ्क-निचया, रशना-नि स्वनेनेव किञ्चन

---

कमल-भ्रमेणेव-विकसितारविन्दभ्रान्त्येव, वदनम्-लपनम्, अभिपतत-समीपमुपसर्पत, सभ्रूभङ्गम्-भ्रूपातपुरस्सरम्, ईक्षमाणाम्-अवलोकयन्तीम् । कपोलपालौ-गण्डस्थलप्रान्ते, लग्नेन-ससक्तेन, परागरागेण-पुष्पधूलिलौहित्येन, होलिकामहोत्सवनेपथ्येन-होलोद्भववेषेण, अवतरन्तीम्-आविर्भवन्तीम्। मल्ली-वल्ली-सघर्षोन्मथितेन-मालती-व्रतति-ससर्ग-मर्दितेन, अधररागेण-ओष्ठलौहित्येन, तर्षम्-पानेच्छाम् अर्थादधरमधुन, जनयन्तीम्-उद्भावयन्तीम् । शुकशावकरावानुकारि-कीरशिशुशब्दविडम्बकम्, मञ्जु-सुन्दरम्, मञ्जीरयो-नूपुरयो, शिञ्जितम-भूषणध्वनि यस्यास्ताम् । "भूषणानान्तु शिञ्जितम्" इत्यमर । गृहीतकुसुमस्तवकाम्-धृतपुष्पगुच्छाम्, यवनकामिनीम्-म्लेच्छवनिताम्, अद्राक्षीत्-अपश्यत् ।

दक्षकरम्-दक्षिणहस्तम् । स्र समानात्-स्खलत, वसनात्-वासस, दर्शित-साक्षात्कारित, ताटङ्कनिचय-कर्णभूषणस्रजो यया सा । रशनानि-

---

भ्रम से अपने मुख पर टूट पडनेवाले मधुकरो को सम्भ्रमपूर्वक त्योरी चढाकर देखती हुई, गालो पर लगी पराग की लालिमा से मानो होली मनाने के वेश मे आनेवाली, मालतीलता के ससर्ग से उन्मथित अधरोष्ठराग से अधर-पान की तृष्णा को बढाती सी, मधुर झङ्कार से सुग्गो के बच्चो की मधुर-ध्वनि के अनुकारी नूपुरो की ध्वनि से सुशोभित एव हाथ मे फूलो के गुच्छे लिए आ रही किसी यवन-युवती को देखा ।

महाराष्ट्रराज को देखते ही उस यवनी ने दायाँ हाथ उठाकर शिर झुकाकर उन्हे सलाम किया और साडी के विपरीत जाने के कारण दृष्टिपथ मे आ-जाने वाले कर्णालङ्कारो [ झुमको ] से सुशोभित, करधनी के भूषणो की ध्वनि

वचनीयमिति सूचयन्ती, लोलल्ललन्तिका, सूक्ष्मवसनान्तर्देदीप्यमान-वालपाश्या, बद्धकरसम्पुटा, एकत समवतस्थे।

महाराजस्तु ता तथाभूतामालक्ष्यैवमालपत्।

महाराज —भद्रे! का त्वम्? कुत ममायाता? किमीहसे? कि विवक्षसि? कथमेकाकिनी वनेषु भ्रमन्ती न लज्जसे? न वा विभेषि? रमणीया तवाऽऽकृति, वरणीय वय—इति कथ न स्वगेहे स्वकुटुम्बेन सम वससि? किमिति चाञ्चल्यमङ्गीकृतवत्यसि? स्फुट वद।

**यवनी**—महाराज! अत्रभवत्या दिल्लीवल्लभस्य तनयाया सहचरी मामवैतु श्रीमान्। श्रीमती तु चन्द्रशाला-गवाक्ष-जालिकातो

---

स्वनेनेव—सारसनशिञ्जितेनेव, वचनीयम्—वक्तव्यम्, सूचयन्ती—बोधयन्ती। लोलन्ती—चलन्ती, ललन्तिका—आनाभिलम्बितकण्ठिका यस्या सा। सूक्ष्मवसनस्य—जूटकबन्धनस्य, झूल"झूल, जाल" इति प्रसिद्धस्य, अन्त—मध्ये, देदीप्यमाना—अतितरा प्रकाशमाना, वालपाश्या—शिरोरुहसमूहधार्यमाण-सुवर्णपट्ट यस्या सा। बद्धकरसम्पुटा—कृताञ्जलिका। समवतस्थे—स्थिता।

आलक्ष्य—अवलोक्य।

भद्रे—कल्याणि। विवक्षसि—वक्तुमिच्छसि। एकाकिनी—असहाया। विभेषि—भयम् अनुभवसि। आकृति—अवयवसस्थानम्। वरणीयम्—विवाहयोग्यम्।

सहचरीम्—सवकार्येषु सम्मिलन्ती भृत्याम्। चन्द्रशालाया—शिरोगृहस्य,

---

से अपने वक्तव्य को प्रकाशित सी करती हुई, लटकते हार से मनोरम पतले वस्त्र (जाल) के भीतर चमकते केश-पाश वाली वह यवन-कामिनी हाथ जोडकर एक ओर खडी हो गई।

महाराज—तुम कौन हो? कहाँ से आ रही हो? तुम्हारी अभिलाषा क्या है? क्या बोलना चाहती हो? अकेली इस जङ्गल मे घूमने मे तुम्हे लज्जा नही आती? (किसी चीज का) डर भी नही होता? देखो—तुम्हारी आकृति बहुत ही मनोहर है और उम्र भी व्याहने की (नव-यौवन) है, फिर अपने परिवार के साथ अपने घर ही क्यो नही रहती? तुम अब भी इतना चञ्चल क्यो हो? ठीक-ठीक बताओ।

वनानीक्षमाणा श्रीचरणानपश्यदिति किमपि मद्द्विश्य मम श्रीपितुरर्नी।
अहञ्च केवल तदाज्ञा-पालन-व्रत शिरसा वहन्ती समागताऽस्मि।
कस्या वाऽपरस्या साहस भवेद् महाराजस्य समीप एवमुपस्थातुम्?

**महाराज**—अपि राजकुमार्या सहचर्य्यसि?

**सहचरी**—[ साभिवादनम ] आम, महाराज।

**महाराज**—कच्चित कुशलिन्यत्र भवती?

**सहचरी**—महाराज! कुत कुशलम्?

**महाराज**—कि तत्?

**सहचरी**—महाराज! अत्यन्त खिद्यते सा।

**महाराज**—तत्किम्? कि भृत्या नावहन्ति तदाज्ञाम्? सत्कारे नियुक्ता न सत्कुर्वन्ति? समये नोपस्थाप्यते सामग्रीजातम्? विनय

---

"चन्द्रशाला शिरोगृहम्" इत्यमर। गवाक्षजालिकात—वातायनिकारन्ध्रत। श्रीचरणान्—भवत। सन्दिश्य—सन्देश दत्त्वा, तस्या आज्ञापालनमेव व्रतम्—नियमम्, वहन्ती—धारयन्ती। अपरस्या—अन्यस्या, भवतो भवदीयाया वाऽसम्बन्धिन्या।

नावहन्ति—न पालयन्ति। विकलयति—खेदयति।

---

**यवनी**—महाराज! मै दिल्ली-नरेश की पुत्री की दासी हूँ। राजभवन की बारादरी की खिडकियो से वन की ओर झाँकते समय राजकुमारी ने श्रीमान् को देख लिया है और इसलिये उन्होने कुछ सन्देशा पहुँचाने के लिये मुझे आपके पास भेजा है। राजकुमारी की आज्ञा का पालन करना ही मेरा काम है, इसलिए मै उनकी आज्ञा को शिरोधार्य समझ कर आपके पास आई हूँ। मुझ जैसी दूती को छोड कौन सी दूसरी स्त्री हो सकती है जो आपके पास इस प्रकार सहसा आ जाने का साहस कर सके!

**महाराज**—अच्छा, तुम राजकुमारी की सेविका हो?

**यवनी सहचरी**—( प्रणामपूर्वक ) जी हाँ, श्रीमन्!

**महाराज**—क्या राजकुमारी सकुशल है?

**सहचरी**—महाराज! सकुशल कैसे रह सकती है?

**महाराज**—क्या बात है?

**सहचरी**—महाराज! राजकुमारी तो आज-कल बहुत ही खिन्न है।

न रक्षन्ति रक्षका ? दिल्ली-गमनाभिलाषो वा विकलयति राजकुमारीम् ?

**सहचरी**—महाराज ! नेद किमप्याशङ्कनीयम् ।

**महाराज**—तत्किमेतद्देशीय-वायु-जलादिक न भवति तदनुकूलमिति शिथिला राजकुमारी ?

**सहचरी**—दीनबन्धो ! नास्ति सोऽपि हेतु खेदस्य ।

**महाराज**—तत्कि मयैव किमप्यपराद्धम् ?

**सहचरी**—आ ! शान्त पापम् ! नैतत्स्वप्नेप्वप्याशङ्क्यते आतिथेयेषु कोङ्कणचक्रवर्तिषु ।

**महाराज**—[ क्षण चिन्तयित्वा ] अथापनयतु मे सन्देह सहचरी, किमिति खिन्ना राजकुमारी ?

---

शिथिला—खिन्ना ।

आतिथेयेषु—अतिथिषु साधुषु ।

---

महाराज—खिन्नता क्यो ? क्या सेवक लोग उनकी आज्ञा नही मानते या उनके सत्कार के लिए नियुक्त अनुचर उनका उचित सत्कार नही करते ? या समय पर उन्हे आवश्यक चीजे नही मिल पाती ? अथवा उनके रक्षक औचित्य का निर्वाह नही कर रहे ह ? या दिल्ली जाने की उत्कण्ठा ही उन्हे सता रही है ?

सहचरी—महाराज ! इन परिस्थितियो का तो नाम भी नही लिया जा सकता ।

महाराज—तो क्या यहाँ की जलवायु की प्रतिकूलता के कारण ही राजकुमारी खिन्न है ?

सहचरी—नही महाराज ! उनकी खिन्नता का यह भी कारण नही है ।

महाराज—तो क्या मुझसे ही कुछ अपराध हो गया है ?

सहचरी—आप जैसे अतिथिसेवक कोङ्कण-देश-सम्राट् के विषय मे तो इस तरह स्वप्न मे भी नही सोचा जा सकता है ।

महाराज—( कुछ देर सोचकर ) अच्छा, तो अब तुम ही मेरी शङ्का को दूर करो । यह बतलाओ कि राजकुमारी किस कारण से खिन्न ह ।

**सहचरी**—महाराज ! न विद्म को नाम व्याधिर्धुनोति राजकुमारीम् । साऽस्माभिरतिसावधानतया सेव्यमानाऽपि प्रतिक्षणमनिमिपपात-निरुद्ध-नि श्वास चेक्ष्यमाणाऽपि रोमाञ्चति, स्विद्यति, सीत्करोति, ताम्यति, विलपति, वेपते, उद्भ्रमति, रोदिति, ग्लायति, क्लिश्यति, मुह्यति, मूर्च्छति च । धीर समीरमासाद्याधिक खिद्यते, शीतमयूखमालोक्याधिक तप्यते, कोकिल-कलरवमाकर्ण्य कर्णयोस्तोद्यमानेव कराभ्या कर्णकुहर पिधायान्तर्निविशते, अस्माभिर्हास्यमानाऽपि न हसति, विविध-विलास-रामणीयकेष्वपि न रमते, पाटलि-पटल-कलिका-मालामपि ज्वलन-ज्वाला-जालावलीमिव वेवेत्ति । किं

---

व्याधि—रोग व्यथा । विशिष्ट आधिव्याधि, स चासह्या मानसिकव्यथैव । अग्रे च लक्षणैराधि स्पष्टयति । प्रतिक्षणम्—क्षणे क्षणे, अनिमिषपातनिरुद्धनिश्वासम्—निर्निमेषश्वासरोधपुरस्सरम्, ईक्ष्यमाणा—अवलोक्यमाना, रोमाञ्चति—पुलक बिभर्ति । धीरम्—मन्दगतिम्, आसाद्य—लब्ध्वा, शीतमयूखम्—हिमदीधितिम्, तप्यते—क्लिश्नाति । कोकिल-कलरवम्—पिककुहूशब्दम्, कर्णयो—श्रोत्रयो, तोद्यमानेव—पीड्यमानेव, कर्णकुहरम्—श्रोत्रशष्कुलीम्, अन्तर्निविशते—अन्तराले गच्छति । हास्यमाना—नर्मवचसा गोचरीक्रियमाणा, न हसति—न कखति । विविधेषु—अनेकप्रकारेषु, विलासरामणीयकेषु—क्रीडासौन्दर्येषु। पाटलिपटलकलिकामालाम्—ब्राटलासमूहकोरकस्रजम्, ज्वलन-ज्वालाजालावलीम्—दहनकीलालव्रजपङ्क्तिम्, वेवेत्ति—अवधारयति ।

---

सहचरी—महाराज ! मै नही जानती कि राजकुमारी को कौन सा मनोरोग सता रहा है । यद्यपि हम लोग अत्यन्त सावधान होकर उनकी सेवा मे लगी रहती है और श्वास-प्रश्वास-क्रिया को भी रोक कर सर्वदा एकटक दृष्टि से उनको देखती रहती है, फिर भी उनके शरीर पर कभी रोमाञ्च हो उठता, कभी पसीना आ जाता, कभी जोरो से साँस लेने लग जाती है, कभी उतावली हो जाती है, कभी विलाप करने लग जाती है, कभी काँपने लग जाती है, कभी चक्कर खाने लग जाती है, कभी रोने लग जाती है, कभी हतोत्साह मालूम पडती है, कभी क्लेश का अनुभव करती है, कभी मोहित हो जाती है और कभी तो मूर्छित भी हो जाती है । मन्द वायु को पाकर

न रक्षन्ति रक्षका ? दिल्ली-गमनाभिलाषो वा विकलयति राजकुमारीम् ?

**सहचरी**—महाराज ! नेद किमप्याशङ्कनीयम् ।

**महाराज**—तत्किमेतद्देशीय-वायु-जलादिक न भवति तदनुकूलमिति शिथिला राजकुमारी ?

**सहचरी**—दीनवन्धो ! नास्ति सोऽपि हेतु खेदस्य ।

**महाराज**—तत्कि मयैव किमप्यपराद्धम् ?

**सहचरी**—आ ! शान्त पापम् ! नैतत्स्वप्नेष्वप्याशङ्क्यते आतिथेयेषु कोङ्कणचक्रवर्तिषु ।

**महाराज**—[ क्षण चिन्तयित्वा ] अथापनयतु मे सन्देह सहचरी, किमिति खिन्ना राजकुमारी ?

---

शिथिला—खिन्ना ।

आतिथेयेपु—अतिथिपु साधुषु ।

---

महाराज—खिन्नता क्यो ? क्या सेवक लोग उनकी आज्ञा नही मानते या उनके सत्कार के लिए नियुक्त अनुचर उनका उचित सत्कार नही करते ? या समय पर उन्हे आवश्यक चीजे नही मिल पाती ? अथवा उनके रक्षक औचित्य का निर्वाह नही कर रहे ह ? या दिल्ली जाने की उत्कण्ठा ही उन्हे सता रही है ?

सहचरी—महाराज ! इन परिस्थितियो का तो नाम भी नही लिया जा सकता ।

महाराज—तो क्या यहाँ की जलवायु की प्रतिकूलता के कारण ही राजकुमारी खिन्न हे ?

सहचरी—नही महाराज ! उनकी खिन्नता का यह भी कारण नही है ।

महाराज—तो क्या मुझसे ही कुछ अपराध हो गया हे ?

सहचरी—आप जैसे अतिथिसेवक कोङ्कण-देश-सम्राट् के विषय मे तो इस तरह स्वप्न मे भी नही सोचा जा सकता हे ।

महाराज—( कुछ देर सोचकर ) अच्छा, तो अब तुम ही मेरी शङ्का को दूर करो । यह बतलाओ कि राजकुमारी किस कारण से खिन्न है ।

**सहचरी**—महाराज ! न विद्म को नाम व्याधिर्धुनोति राजकुमारीम्। साऽस्माभिरतिसावधानतया सेव्यमानाऽपि प्रतिक्षणमनिमिषपात-निरुद्ध-निश्वासं चेक्ष्यमाणाऽपि रोमाञ्चति, स्विद्यति, सीत्करोति, ताम्यति, विलपति, वेपते, उद्भ्रमति, रोदिति, ग्लायति, क्लिश्यति, मुह्यति, मूर्च्छति च। धीर समीरमासाद्याधिकं खिद्यते, शीतमयूखमालोक्याधिकं तप्यते, कोकिल-कलरवमाकर्ण्य कर्णयोस्तोद्यमानेव कराभ्यां कर्णकुहरं पिधायान्तर्निविशते, अस्माभिर्हास्यमानाऽपि न हसति, विविध-विलास-रामणीयकेष्वपि न रमते, पाटलि-पटल-कलिका-मालामपि ज्वलन-ज्वाला-जालावलीमिव वेवेत्ति। किं

व्याधि—रोग व्यथा। विशिष्ट आधिव्याधि, स चासह्या मानसिकव्यथैव। अग्रे च लक्षणैराधिं स्पष्टयति। प्रतिक्षणम्—क्षणे क्षणे, अनिमिषपातनिरुद्धनिश्वासम्—निर्निमेषश्वासरोधपुरस्सरम्, ईक्ष्यमाणा—अवलोक्यमाना, रोमाञ्चति—पुलकं बिभर्ति। धीरम्—मन्दगतिम्, आसाद्य—लब्ध्वा, शीतमयूखम्—हिमदीधितिम्, तप्यते—क्लिश्नाति। कोकिल-कलरवम्—पिककुहूशब्दम्, कर्णयो—श्रोत्रयो, तोद्यमानेव—पीड्यमानेव, कर्णकुहरम्—श्रोत्रशष्कुलीम्, अन्तर्निविशते—अन्तराले गच्छति। हास्यमाना—नमवचसां गोचरीक्रियमाणा, न हसति—न कखति। विविधेषु—अनेकप्रकारेषु, विलासरामणीयकेषु—क्रीडासौन्दर्येषु। पाटलिपटलकलिकामालाम्—पाटलासमूहकोरकस्रजम्, ज्वलन-ज्वालाजालावलीम्—दहनकीलालव्रजपङ्क्तिम्, वेवेत्ति—अवधारयति।

सहचरी—महाराज ! मै नही जानती कि राजकुमारी का कौन सा मनोरोग सता रहा है। यद्यपि हम लोग अत्यन्त सावधान होकर उनकी सेवा मे लगी रहती है और श्वास-प्रश्वास-क्रिया को भी रोक कर सर्वदा एकटक दृष्टि से उनको देखती रहती है, फिर भी उनके शरीर पर कभी रोमाञ्च हो उठता, कभी पसीना आ जाता, कभी जोरो से साँस लेने लग जाती है, कभी उतावली हो जाती है, कभी विलाप करने लग जाती है, कभी काँपने लग जाती है, कभी चक्कर खाने लग जाती है, कभी रोने लग जाती है, कभी हतोत्साह मालूम पडती है, कभी क्लेश का अनुभव करती है, कभी मोहित हो जाती है और कभी तो मूर्छित भी हो जाती है। मन्द वायु को पाकर

कथयामि ? केवल दक्षतो वामतश्च परिवर्तनै , दीर्घनिश्वासै , सजृम्भाऽङ्गुलिस्फोटनैश्च सा क्षपा क्षपयति ।

**महाराष्ट्रराज** —[ स्वस्मिन्नेव ] तत् कि मदन-व्याधिरेप ? अस्तु, शृणोमि तावत् ।

**सहचरी** — महाराज ! सा साञ्जन-वारिधारा-सम्पात-सम्मर्द-मलिनौ पाण्डुरौ कपोलौ, ताप-तपन-तप्त-निश्वासाहति-शुष्कमधरम्, कर्पूर-पूर-चूर्ण-मञ्जिम्ना केनचिद् धवलिम्ना कशिम्ना च समालि-

परिवर्त्तनै –वलनै , दीर्घनिश्वासै –लम्वोच्छ्वासै , सजृम्भाङ्गुलिस्फोटनै –गात्रविनामाङ्गुलिस्फोटनपुरस्सरम्, क्षपाम्–निशीथिनीम्, क्षपयति–यापयति ।

साञ्जनस्य–सकज्जलस्य, वारिधारासम्पातस्य–जलप्रवाहपतनस्य, सम-र्दन–सम्पर्केण, मलिनौ–कज्जलाविलौ, पाण्डुरौ–पीतवर्णौ । ताप एव–काम-ज्वर एव, तपन –सूय , तेन तप्तस्य–उष्णताङ्गतस्य, निश्वासस्य, आहतिभि –ताडनै , शुष्कम नीरसम् । कर्पूर-पूर-चूर्ण-मञ्जिम्ना–हिमवालुकापुञ्ज-क्षोद-

तो और भी खिन्न हो जाती ह, चन्द्रमा की चन्द्रिका को देखते ही अधिक क्लेश पाने लग जाती ह, कोयल की मन्द मधुर काकली को सुनकर तो अपने दोनो कानो को वन्द कर इस तरह भीतर घुस जाती ह जैसे उसे सुनने से उनके कानो मे पीडा उत्पन्न होने लग जाती हो । हम लोगो के परिहास पर भी उन्हे हँसी नही आती, अनेक प्रकार के मनोरञ्जन खेल मे भी उनका मन नही लगता, गुलाव के फूलो की कलियो की माला को तो अग्निशिखा जैसी समझती ह । मैं क्या कहूँ ! राजकुमारी तो केवल दॉयी-वॉयी करवटे वदल कर, लम्बी सॉसे भर कर, जँभाई लेकर, अङ्गुलियो को चटका कर किसी पकार रात गँवाती ह ।

महाराज—( मन ही मन ) तो क्या यह काम-रोग ह ? अच्छा और भी सुन लूँ ।

सहचरी—महाराज ! राजकुमारी के दोनो गाल अञ्जन से मिली हुई अश्रुधारा के गिरने से मलिन हो गये ह, उनका अधरोष्ठ कामज्वररूपी सूर्य से सन्तप्त निश्वास के आघात से सूख गया हे और उनके सम्पूण शरीर मे कर्पूरचूर्ण की शोभा की तरह शोभा को उत्पन्न करनेवाली एक वर्णनातीत

ङ्गितान्यङ्गानि वहति । कदाचिद् विमनायमाना किञ्चित्पुस्तकमादाय पिपठिषन्त्यपि वाष्प-जलै पत्राण्याविलयति । कर्हिचिदक्षिणी निमील्य विरहमयानि कानिचिच्छन्दास्याम्रेडते । कदाचन कोणात् कोण पर्य्यटन्ती कुड्ये लम्बमान महाराज-चित्र-फलकमालोकमालोक वाष्प-विन्दु-व्रज-व्याजेन धैर्यमिव वमति । कर्हिचन फलकार्पिता-मेवात्रभवतो मूर्ति सम्बोध्य चिरमालपति, उपालभते, स्तवीति, प्रार्थयते, वन्दते च । अथ फलकमिदमवतारयति, करे करोति, वक्षसि धत्ते, निपुणमीक्षते, गाढ चुम्बति, चिरमालिङ्गति, शिरसा च वहति। क्वचन स्वहस्तेनापि श्रीचरणानामिव मूर्तिमालिखति, आत्मनश्च

शोभया, केनचित्–अवचनीयेन, धवलिम्ना–श्वैत्येन, कृशिम्ना दौर्बल्येन, विमनायमाना–उत्का । पिपठिषन्ती–पठितुमिच्छन्ती, वाष्पजलै –अश्रुभि, आविलयति–दूषयति । विरहमयानि-विप्रलम्भशृङ्गारवर्णनपराणि, छन्दासि–काव्यानि– पारसीकै "शेर" इत्यभिहितानि । कुड्ये–भित्तौ । वाष्पविन्दु-व्रजव्याजेन–अश्रुपृषत्समूहच्छद्मना, वमतीव–उद्गिरतीव, क्रियोत्प्रेक्षा । फलकार्पिताम् चित्रलिखिताम् । उपालभते–उपालम्भ ददाति । 'उलाहना देती है ।' स्तवीति–स्तुति करोति । वन्दते–नमस्करोति । अवतार-यति–अवरोहयति । वक्षसि–उरसि । धत्ते–धारयति । गाढम्–घन यथा तथा । मूर्त्तिम्–चित्रम् । आत्मन –स्वस्या । प्रतिमाम् मूर्त्तिम् । विन्य-

श्वेतिमा ( उजलापन ) और दुर्बलता छा गई है । कभी उद्विग्न होकर किसी पुस्तक को पढने की इच्छा से हाथ मे तो ले लेती है पर उनके आँसुओ से उसके पन्ने धुल जाते हैं । कभी-कभी आँखे मूद कर कुछ विरह-गीतो को बार-बार गाती है । कभी-कभी अपने कमरे मे इधर-उधर घूमती हुई जब दीवार मे लटकते हुये महाराज के चित्र को देखती है तो आँसू गिराने के बहाने वे अपने धैर्य को ही खो बैठती ( गिरा देती ) है । कभी-कभी तो आपकी चित्र-लिखित मूर्ति को ही सम्बोधित करती हुई चिर-काल तक बाते भी करती, उलाहना भी देती, स्तुति भी करती, प्रार्थना भी करती और प्रणाम भी करती है । फिर बाद मे उस चित्र को नीचे उतारकर कभी हाथो मे लेती तो कभी अपने हृदय पर रखती, कभी टकटकी लगाकर देखती तो कभी चूमती और

कथयामि ? केवलं दक्षतो वामतश्च परिवर्तनैः, दीर्घनिश्वासैः, सजृम्भाऽङ्गुलिस्फोटनैश्च मा क्षपा क्षपयति ।

महाराष्ट्रराज — [ स्वस्मिन्नेव ] तत् किं मदन-व्याधिरेष ? अस्तु, शृणोमि तावत् ।

सहचरी – महाराज ! सा साञ्जन-वारिधारा-सम्पात-सम्मर्द-मलिनौ पाण्डुरौ कपोलौ, ताप-तपन-तप्त-निश्वासाहति-शुष्कमधरम्, कर्पूर-पूर-चूर्ण-मञ्जिम्ना केनापि धवलिम्ना कशिम्ना च समालि-

---

परिवर्त्तनैः–वलनैः, दीर्घनिश्वासैः–लम्बोच्छ्वासैः, सजृम्भाङ्गुलिस्फोटनैः–गात्रविनामाङ्गुलित्रोटनपुरस्सरम्, क्षपाम्–निशीथिनीम्, क्षपयति–यापयति ।

साञ्जनस्य–सकज्जलस्य, वारिधारासम्पातस्य–जलप्रवाहपतनस्य, सम-र्देन–सम्पर्केण, मलिनौ–कज्जलाविलौ, पाण्डुरौ–पीतवर्णौ । ताप एव–कामज्वर एव, तपनः–सूर्यः, तेन तप्तस्य–उष्णताङ्गतस्य, निश्वासस्य, आहतिभिः–ताडनैः, शुष्कम् नीरसम् । कर्पूर-पूर-चूर्ण-मञ्जिम्ना–हिमवालुकापुञ्ज-क्षोद-

---

तो और भी खिन्न हो जाती है, चन्द्रमा की चन्द्रिका को देखते ही अधिक क्लेश पाने लग जाती है, कोयल की मन्द मधुर काकली को सुनकर तो अपने दोनो कानो को बन्द कर इस तरह भीतर घुस जाती है जैसे उसे सुनने से उनके कानो मे पीडा उत्पन्न होने लग जाती हो । हम लोगो के परिहास पर भी उन्हे हँसी नही आती, अनेक प्रकार के मनोरञ्जन खेल मे भी उनका मन नही लगता, गुलाब के फूलो की कलियो की माला को तो अग्निशिखा जैसी समझती है । मै क्या कहूँ ! राजकुमारी तो केवल दॉयी-बॉयी करवटे बदल कर, लम्बी सॉसे भर कर, जँभाई लेकर, अङ्गुलियो को चटका कर किसी प्रकार रात गँवाती है ।

महाराज—( मन ही मन ) तो क्या यह काम-रोग है ? अच्छा और भी सुन लूँ ।

सहचरी—महाराज ! राजकुमारी के दोनो गाल अञ्जन से मिली हुई अश्रुधारा के गिरने से मलिन हो गये है, उनका अधरोष्ठ कामज्वररूपी सूर्य से सन्तप्त निश्वास के आघात से सूख गया है और उनके सम्पूर्ण शरीर मे कर्पूरचूर्ण की शोभा की तरह शोभा को उत्पन्न करनेवाली एक वर्णनातीत

ङ्गितान्यङ्गानि वहति। कदाचिद् विमनायमाना किञ्चित्पुस्तकमादाय पिपठिषन्त्यपि वाष्प-जलैः पत्राण्याविलयति। कर्हिचिन्नयने निमील्य विरहमयानि कानिचिच्छन्दास्याम्रेडते। कदाचन कोणात् कोण पर्य्यटन्ती कुड्ये लम्बमान महाराज-चित्र-फलकमालोकमालोक वाष्प-विन्दु-व्रज-व्याजेन धैर्यमिव वमति। कर्हिचन फलकार्पिता-मेवात्रभवतो मूर्ति सम्बोध्य चिरमालपति, उपालभते, स्तवीति, प्रार्थयते, वन्दते च। अथ फलकमिदमवतारयति, करे करोति, वक्षसि धत्ते निपुणमीक्षते, गाढं चुम्बति, चिरमालिङ्गति, शिरसा च वहति। क्वचन स्वहस्तेनापि श्रीचरणानामिव मूर्तिमालिखति, आत्मनश्च

---

शोभया, केनचित्–अवचनीयेन, धवलिम्ना–श्वैत्येन, कृशिम्ना दौवल्येन, विमनायमाना–उत्का। पिपठिषन्ती–पठितुमिच्छन्ती, वाष्पजलैः–अस्रैः, आविलयति–दूषयति। विरहमयानि-विप्रलम्भशृङ्गारवर्णनपराणि, छन्दांसि–काव्यानि– पारसीकैः "शेर" इत्यभिहितानि। कुड्ये–भित्तौ। वाष्पविन्दु-व्रजव्याजेन–अश्रुपृषत्समूहच्छद्मना, वमतीव–उद्गिरतीव, क्रियोत्प्रेक्षा। फलकार्पिताम् चित्रलिखिताम्। उपालभते–उपालम्भ ददाति। 'उलाहना देती है।' स्तवीति–स्तुतिं करोति। वन्दते–नमस्करोति। अवतार-यति–अवरोहयति। वक्षसि–उरसि। धत्ते–धारयति। गाढम्–घन यथा तथा। मूर्त्तिम्–चित्रम्। आत्मन–स्वस्या। प्रतिमाम् मूर्तिम्। विन्य-

---

श्वेतिमा ( उजलापन ) और दुर्बलता छा गई है। कभी उद्विग्न होकर किसी पुस्तक को पढने की इच्छा से हाथ मे तो ले लेती है पर उनके आंसुओ से उसके पन्ने धुल जाते है। कभी-कभी आँखे मूद कर कुछ विरह-गीतो को बार-बार गाती है। कभी-कभी अपने कमरे मे इधर-उधर घूमती हुई जब दीवार मे लटकते हुये महाराज के चित्र को देखती है तो आंसू गिराने के बहाने से अपने धैर्य को ही खो बैठती ( गिरा देती ) है। कभी-कभी तो आपकी चित्र-लिखित मूर्ति को ही सम्बोधित करती हुई चिर-काल तक बाते भी करती, उलाहना भी देती, स्तुति भी करती, प्रार्थना भी करती और प्रणाम भी करती है। फिर बाद मे उस चित्र को नीचे उतारकर कभी हाथो मे लेती तो कभी अपने हृदय पर रखती, कभी टकटकी लगाकर देखती तो कभी चूमती और

प्रतिमा तद्वामत एव विन्यस्यति, ततश्च क्षण मोदते, क्षण हसति, क्षण विषीदति, क्षण क्रन्दति, क्षणमालपति, क्षणञ्च विलपति–इति किमिव कथयामि ? कुमार्या आदेशो मा मुखरितवानित्यपराधश्चेत् क्षन्तव्यो महाराष्ट्रराजै ।

महाराष्ट्रराजस्तु ता तथाऽभिधाय शिरो नमयित्वा वद्धकर-सम्पुटामेकत स्थितामालोक्य, रसनार्याश्च स्वस्मिन्ननुरागमवधार्य, तत्क्षणमेव प्राप्तावसरेण धैर्यघस्मरेण स्मरेण व्याकुलीकियमाण क्षण किमपि नोक्तवान् । मार-विकार-प्रसार-भार-जर्ज्जरितमाकारञ्च कथ कथमपि कुसुम-स्तवकावचयै कल-कूजित-पूजित-पतत्रि-कुल-कलित-

---

स्यति–स्थापयति । वामाङ्गस्थापनेन हिन्दुधमव्यवहारस्वीकरणपूवक पत्नीत्वा-ङ्गीकरण व्यनक्ति । क्रन्दति–रोदिति । आलपति–आलाप करोति । विल-पति–परिदेवन करोति । मुखरितवान्–वहुभाषणवतीमकृत ।

अभिधाय–निगद्य , शिरो नमयित्वा–प्रणम्य, कथनसमाप्तिसूचक-मिदम् । वद्धकरसम्पुटाम्–कृताञ्जलिम् । प्राप्तावसरेण–लब्धसन्दर्भेण, धैर्यघस्मरेण–धीरताभक्षकेण, "भक्षको घस्मरोद्मर" इत्यमर । स्मरेण–मद-नेन, व्याकुलीक्रियमाण –विचेतस्कता नीयमान , मारविकारस्य–कामवि-कृते स्वेदादे , प्रसारस्य–प्रसरणस्य, भारेण–आधिक्येन, जर्जरितम्–जीर्ण-

---

और कभी गले लगाती तो कभी माथे पर रखती ह । कभी-कभी तो अपने हाथ से ही आपका चित्र वनाकर उसकी बायी ओर अपना भी चित्र बना डालती है और फिर कभी प्रसन्न होती है, कभी हँसने लग जाती हे, कभी खिन्न हो उठती ह, कभी रोने लग जाती है, कभी आलाप करती हे और कभी विलाप भी किया करती है । और मै कहाँ तक कहूँ ! राजकुमारी की आज्ञा के कारण ही मुझे आपसे इतना कहना पडा । यदि मेरी कुछ गलतियाँ हुई हो तो कृपया आप क्षमा करे ।

सारी स्थिति का वणन करने के पश्चात् नतमस्तक एव हाथ जोडने की मुद्रा मे एक ओर खडी सहचरी को देखकर और रोशनआरा का अपने प्रति अनन्य प्रेम जानकर महाराष्ट्रराज तत्क्षण ही धैयहारक अवसर प्राप्त कामदेव की वेदना से व्याकुल होकर क्षण भर कुछ नही बोले । कामवेदना के अत्यधिक प्रसार से जर्जरित अपने स्वरूप को महाराष्ट्रराज ने फूलो के गुच्छे चुनने,

शाखाऽनुसन्धानै, तत्क्षण-त्रोटित-कदली-दल-वीजनै स्वेदापनोदनैश्च निगूढवान्। ता सहचरीन्तु—

"त्रायता महाराज, त्यक्ष्यति प्राणानत्र भवती यदि न रक्ष्यते श्रीचरणै"—इत्यभिदधानाम्, "ओम्! निवेदय भवतीमेषोऽहमायामि" इत्यभिधाय विसृष्टवान्।

तस्या प्रयाताया च चिर बहुशश्चिन्तयन् मुहूर्तमतिवाह्य, स्वयमपि शनै शनैस्तोरणदुर्ग-शिरोगृह सनाथयामास। तत्र च तथाभूतया रसनार्या सादरमुपवेशित, स्वय सखीजनेऽपसृते वार वार रसनार्या मुख पश्यन्, करतल-न्यस्त-कपोला रसनारी व्यजिज्ञपद्, यद् "भद्रे!

प्रायम्, आकारम्—शरीरम्, कुसुमस्तबकावचयै—पुष्पगुच्छसकलनै, कलकूजितेन—मधुरस्वरेण, पूजिलेन—सत्कृतेन,पतत्रिकुलेन—विहगनिवहेन, कलितानाम्—व्याप्तानाम्, शाखानाम्—वृक्षावयवानाम्। 'समे शाखालते' इत्यमर। अनुसन्धानै—विचारणै, समवलोकनैरिति यावत्। तत्क्षणम्—तत्कालम्, त्रोटितस्य—भञ्जितस्य, कदली-दलस्य—रम्भापत्रस्य, वीजनै—व्यजनव्यापारै, स्वेदापनोदनै—घर्मबिन्दुदूरीकरणै, निगूढवान्—गोपितवान्।

अभिदधानाम्—कथयन्तीम्। आयामि—आगच्छामि। "वर्तमानसामीप्ये वर्तमानवद्वा"। विसृष्टवान्—व्यक्तवान्, गमनाय।

तोरणदुर्गस्य शिरोगृहम्—चन्द्रशालाम्। स्वयम्—आत्मनैव। अप्रेरित एवेति यावत्। अपसृते—दूरीभूते। विज्ञाताभिप्रायत्वात्सहचरीणा स्वय दूरीभवनम्। तदुक्तम् "परेङ्गितज्ञानफला हि बुद्धय"। एतेन सहचरीणामतिनिपुणत्व विशकलितम्। करतलन्यस्तकपोलाम्—हस्ततालिकास्थापितगण्डाम्।

कलरव करने वाले पक्षियों के समूह से सम्पन्न शाखाओ को देखने और तत्क्षण तोडे कदली-दल को झलकर पसीना दूर करने के बहाने से किसी प्रकार व्यक्त न होने दिया और "रक्षा करे महाराज! यदि श्रीमान् राजकुमारी की रक्षा न करेंगे तो वे प्राणान्त कर देंगी" इस प्रकार अनुनय-विनय करती हुई उस सहचरी को "अच्छा, उनसे जाकर कह देना कि मै अभी आ रहा हूँ" यह कह कर वहाँ से भेज दिया।

उस सहचरी के वहाँ से प्रस्थान के पश्चात महाराष्ट्रराज सोचने-विचारने मे कुछ समय व्यतीत कर सिंहद्वार के चोबारे मे घुस गये। वहाँ घुसते ही

श्रुतवानस्मि सहचरीमुखादखिल वृत्तान्तम्, तथाऽपि भवत्या मुखादपि शुश्रूषे कोऽय कथमय कीदृशश्चाय खेद ?"—इति ।

सा तु अतरल-तारकेण क्षुण्णपक्ष्मणेक्षणेन क्षण राजमुखमैक्षिप्ट । ईक्षमाणेव च स्वेद-सलिल-सन्दोहै स्नपितेव महाराष्ट्र-मण्डला-खण्डलाय वाष्प-विन्दु-मौक्तिकावलिमिवोपहरन्ती, श्वास-प्रश्वास-झञ्झा-वातोड्डीन-धैर्या, शोकाङ्कुरैरिव रोमनिकरैर्निगृहीता भयेनेवाकम्पत ।

अथ "कथ्यता, क क्लेश कुमार्या ? कि वाऽभीप्सितम् ?-" इति वदति महाराष्ट्रराजे, सा वेपमानैरङ्गैरिव निवार्यमाणा, मन्मथोन्म-

व्यजिज्ञपत्—विज्ञापितवान् । शुश्रूषे—श्रोतुमिच्छामि । "ज्ञाश्रुस्मृदृशा सन" इत्यात्मनेपदम् ।

अतरलतारकेण—अचपलकनीनिकेन, क्षुण्णपक्ष्मणा—अनिमीलितनेत्रलोम्ना, ईक्षणेन—नयनेन, ऐक्षिप्ट—अलोकयत । स्वेदसलिलसन्दोहै—घर्मजल-व्रातै, स्नपितेव—कृतनिर्णेजनेव, बाष्पबिन्दुमौक्तिकावलीम्—अस्रपृषद्रत्नमालिकाम्, उपहरन्ती—ददती । श्वासप्रश्वासयो, झञ्झावातेन—सवृष्टिकेन पवनेन, अत्र रोदनसहितेन, उड्डीनम्—विलुप्तम् धैर्य यस्या सा । शोकाङ्कुरैरिव—स्वेदोद्गमनैरिव, रोमनिकरै—लोमचयै, भयेनेव—भीत्येव ।

अभीप्सितम्—अभिलषितम् । वेपमानै कम्पमानै निवार्यमाणा—

विरहिणी रोशनआरा ने उन्हे आसन पर आदरपूर्वक बैठाया और बाद मे वहाँ स रोशनआरा की सहेलियो के चले जाने पर एकान्त मे बार-बार उसके मुखमण्डल को देखते हुये करतल पर गाल रख कर बैठी हुई रोशनआरा से उन्होने पूछा—"भद्रे ! यद्यपि आपकी सहचरी के मुख से मैं सारा वृत्तान्त सुन चुका हूँ तथापि आपके मुख से भी मै जानना चाहता हूँ कि आपको क्यो और किस प्रकार का कष्ट है ?

रोशनआरा तो क्षणभर महाराज के मुखमण्डल की ओर टकटकाती ही रह गई । टकटकाते समय ही पसीने के जल से धुले शरीरवाली, आँखो से बहते आसू की बूँदो से महाराष्ट्रराज के प्रति मोतियो का उपहार-सा समर्पित करती हुई, लम्बी साँस की आँधी से च्युत धैयवाली, शोकाकुर-से रहनेवाले रोमपुजो से जकडी वह राजकुमारी मानो भय से ही काँपने लगी ।

थितेन मनसेव मूकीक्रियमाणा, उद्वेल्लितैर्बाष्पैरिव कण्ठे रुध्यमाना, अवहेलितया ह्रियेवावहेल्यमाना, अनासादितचरेण साहसेनेव हास्यमाना, मदन-मदेनेव च मामद्यमाना, न कञ्चन वाचा प्रचार-मूरीचकार।

अथ क्रियासमभिहारेण महाराजेन सान्त्व्यमाना, अभ्यर्थ्यमाना च, अञ्चलान्तेन स्वेदैः सह लज्जामिवापसार्य, कदली-दलैः वीजन-व्याजेन किञ्चनावशिष्ट धैर्यमप्युद्धूय वाष्पाहरण-कैतवेन विवेकमपि

निपिष्यमाना। मन्मथोन्मथितेन—कामजजरितेन, मूकीक्रियमाणा—मौन नीयमाना। उद्वेल्लितैः—उच्छलद्भिः। रुध्यमाना—वायमाणा। अवहेलितया—तिरस्कृतया, ह्रिया—त्रपया, अवहेल्यमाना—तिरस्क्रियमाणा। अनासादितचरेण—पूर्वमप्राप्तेन, साहसेन—मानसिकेन बलकर्मणा, हास्यमाना—उपहस्यमाना। मदनमदेन—कामजविकारेण, मामद्यमाना—अतितरां माद्यन्ती। वाचा प्रचारम्—वाक्प्रसारम्, ऊरीचकार—स्वीचकार।

क्रियासमभिहारेण—पौनःपुन्येन, सान्त्व्यमाना—साम्ना प्रति-बोध्यमाना। अभ्यर्थ्यमाना—प्रार्थ्यमाना।

अञ्चलान्तेन—वसनप्रान्तेन। स्वेदैः सह—घर्मबिन्दुभिः साकम्, लज्जामपसार्य-त्रपां दूरीकृत्य। सहोक्तिरलङ्कारः। कदलीदलवीजनव्याजेन—रम्भापत्रहिल्लोलनच्छद्मना, अवशिष्टम्—शेषम्, उद्धूय—दूरीकृत्य। वाष्पापहरण-

उसके बाद जब महाराष्ट्रराजा ने पूछा—"कहिये, आपको कौन-सी तकलीफ है? आप क्या चाहती हैं?" तो राजकुमारी ने कुछ उत्तर ही नहीं दिया। ऐसा लग रहा था कि उसका काँपता हुआ शरीर उसे बोलने से रोक रहा था, कामवेदना से पीडित चित्त ने उसे मूक बना दिया था, आँसुओं की धारा से पीडित उसका गला रुँध गया था, लज्जा से तिरस्कृत हो रही थी, अभूतपूर्व साहस दिखाने के कारण लोग उसका उपहास कर रहे थे और काम-मद से अधिकाधिक उन्मत्त हो गयी थी।

फिर जब महाराज ने बारम्बार सान्त्वना-पूर्वक पूछा तो अपने आँचल से पसीने के साथ-साथ लज्जा को भी पोंछ कर पंखे के रूप में केले के पत्ते के झलने से कुछ बचे हुए धैर्य को भी उड़ा कर, आँसू पोंछने के बहाने अपने

च सम्मर्द्य, कर्णार्पित-कर्णिकार-पापत्यमान-मधुकर-निकर-विधूनन-च्छलेन निर्मक्षिकमिव विदधती, परितोऽवलोकन-च्छद्मना वास्तुदेवी-श्रवणमिवाऽऽशङ्कमाना, वक्तुकामाऽपि स्वाशय प्रकटयितु यतमानाऽपि स्फुरित्तोत्तराऽपि च विरह-ज्वाला-वलीढ-वसनया प्रकाशमनाजिग-मिषन्त्या भगवत्या सरस्वत्या वारितेव पुनर्मौनमेवाकलयत् ।

ततस्तच्छोकदर्शनातिखिन्नेन महाराष्ट्र-कुम्भिनी-स्तम्भेन पौन-पुन्येन प्रार्थितम्—भद्रे ! अकथितकारणो वर्द्धते खेद । यदि दूती-

---

कैतवेन–अस्रापनयनव्याजेन, विवेकम्–विचारम् सम्मर्द्य–विनाश्य । कर्णयो –श्रोत्रयो, अर्पितेषु–स्थापितेषु, कर्णिकारेषु–तन्नामककुसुमेषु पाप-त्यमानानाम्–वार वार पतताम्, मधुकराणाम्–भ्रमराणाम्, निकरस्य–समूहस्य, विधूननच्छलेन–दूरीकरणव्याजेन, निर्म्मक्षिकम्–जनसञ्चरि-शून्यम्, वास्तुदेवीश्रवणम्–देहल्यधिष्ठातृदेवीश्रुतिम्, आशङ्कमानेव–सशया-नेव । एतेन वक्तव्यस्य परमगोप्यत्व ध्वनितम् । वक्तुकामाऽपि–कथयितुमभिल-षन्त्यपि, स्वाशयम्–स्वाभिप्रायम्, प्रकटयितुम्–व्यक्तीकर्तुम्, यतमाना–चेष्ट-माना । स्फुरितोत्तरा–चञ्चलितोत्तरोष्ठा, किञ्चिद्वक्तु प्रवृत्तेव । विरहज्वाला-वलीढवसनया–वियोगकीलालकवलितवाससा, प्रकाशम्–स्फुटताम्,अनाजिग-मिषन्त्या–आगन्तुमनभिलषन्त्या । निर्वसनत्वादिति स्फुटमेव। वारिता निषिद्धा ।

तच्छोकदर्शनातिखिन्नेन–तद्दुःखावलोकनातिदुःखिना, महाराष्ट्र-कुम्भिन्या –महाराष्ट्रवसुमत्या , स्तम्भेन । 'गौरिला कुम्भिनी क्षमा" इत्यमर । पौन पुन्येन–क्रियासमभिहारेण । अकथितकारण –अनिवेदित-

---

विवेक को भी त्याग कर, कानो मे लटकती कर्णिकार की कलियो पर टूट पडने वाले भौरो के उडाने के बहाने से उस स्थान को एकात सा बनाकर चारो तरफ देखने के कपट से वास्तुदेवी ( घर की देहली की अधिष्ठात्री ) के सुन लेने की आशङ्का-सी करती हुई, बोलने की इच्छा रखती हुई भी, अपने अभिप्राय को प्रकट करने के लिए चेष्टा करती हुई भी, फडकते अधरोष्ठ वाली भी वह मौन रही, मानो विरहानल से उसकी साडी के जल जाने के कारण उसके समक्ष स्पष्ट रूप से प्रस्तुत न होने की इच्छा रखने वाली भगवती सरस्वती ने ही उसे बोलने से रोक दिया हो ।

प्रेषणेन मामनुगृहीतवत्यसि, तत् कथ मानस-खेद-हेतु-कथनेनाधिक न कृतार्थयसि ? नात्र कश्चन तृतीय, न भवति भवत्या वाणी षट्कर्णा। प्राणान् सशयमारोपयसि, न च वक्षि। लज्जा मानयसि, न तु जीवनम्—इति।

परतश्च निश्वासानुपातिभिर्मधुपैरिव परिपीतायाम्, खेद-सागर इव निमग्नायाम्, वाष्प-प्रवाहेणेव क्षालितायाम् मदन-दहनेनेव

---

हेतु। वर्धते-एधते। अनुगृहीतवती-अनुकम्पितवती। मानस-खेद-हेतु-कथनेन-चैतस-दुःख-कारण-निवेदनेन। षट्कर्णा-वक्तृश्रोत्रितरश्रोत्रगोचरा। तृतीयादिश्रवणे रहस्यभेदादाशङ्का भवति। तथा चोक्तम्-"षट्कर्णो भिद्यते मन्त्र" इति। सशयम्-सन्देहस्थानम्। वक्षि-कथयसि। मानयसि-धारयसि। जीवनम्-प्राणनम्।

निश्वासानुपातिभि-निश्वासपश्चाद्गर्तिभि। परित पीतायाम्-आस्वादितायाम्। इवेनोत्प्रेक्षा। एवमग्रेऽपि। निमग्नायाम-ब्रुडितायाम्। बाष्पप्रवाहेण-अस्रपूरेण, क्षालितायामिव-धौतायामिव। मदनदहनेन-

---

तत्पश्चात् राजकुमारी के शोक को देखकर अत्यन्त खिन्न हृदय वाले महाराष्ट्र-भूपति ने बारम्बार उससे कहा—"भद्रे! तुम जो अपने खेद का कारण नही बतला रही हो, इससे मेरे मन का खेद और भी बढ रहा है। यदि दूती भेज कर तुमने मुझे अनुगृहीत किया है तो अब अपनी मनोव्यथा के कारण को बतला कर मुझे और भी अधिक कृतार्थ क्यो नही कर रही हो? यहाँ तीसरा तो कोई भी व्यक्ति नही है। तुम्हारी बात (षट्कर्ण=) फैल जाने योग्य नही होने वाली है। प्राणो को भी सशय मे डाल रही हो पर कुछ बतलाना नही चाह रही हो! सहज लज्जा को सँजोये हुए भी तुम्हे प्राणो को बचाने की चिन्ता नही।

तदनन्तर जब रोशनआरा की लज्जा निश्वास के अनुगामी मधुकरो द्वारा आस्वादित-सी हो गई, खेद-सागर मे डूब-सी गई, अश्रुधारा से धुल-सी गई, कामानल से जल-सी गई, नख-विलेखन से कट-सी गई, दीर्घश्वास से उड-सी

दग्धायाम्, नख-विलेखैरिव कर्तितायाम्, दीर्घोच्छ्वासैरिव विधूतायाम्, महाराजवचनैरिव विलुण्ठिताया च त्रपायाम्, चक्षुषी प्रमृज्य, अभिमुखीभूय, वक्तुमारभत रमनारी ।

महाराज ! सर्व विदितमार्यस्य, केवल पुनरुक्तिरिय भवित्री मदुक्ति, तथाऽपि वार वारमापृच्छ्यमानाऽपि यदि वाच यच्छेय प्रत्युत्तर च न प्रयच्छेय तत्परमापराधिनी स्यामिति निवेदयामि यत् महाराज एव कारण ममाऽऽधीनाम् । न शोभते महाराजे एव वनिता-जन-वञ्चन व्यर्थ-मर्यादा-विकत्थन च ।

---

कामवह्निना, दग्धायामिव–प्रज्वलितायामिव । नखविलेखै –नखविदारणै, कर्त्तितायामिव–छेदितायामिव । विलुण्ठितायाम्–बलादपहृतायाम्, त्रपायाम्–*लज्जायाम्* । *अभिमुखीभूय–सम्मुखीभूय* ।

सर्व विदितमार्यस्येति–एतेन विज्ञाताशयोऽपि महाराजो बलान्मदाननाच्छ्रोतु वाञ्छति निखिलम् । तदिदञ्च महाराजत्व पुरुषत्वञ्चेति ध्वनयति प्रथमवाक्येनैव रसनारी । एषा हि पर विदुषी कवयित्री चेतीतिवृत्तेषु ख्यातम्, नारीणा च विदुषीणा वचन व्यङ्ग्यबहुल भवतीति न तिरोहितम्—"विजृम्भित यस्य किल ध्वनेरिद विदग्धनारीवचन तदाकर" इति श्रीहर्षोक्तिवेदिनामिति यत्किञ्चिदेतत् । पुनरुक्ति —द्वितीयवार कथनम् । मदुक्ति –मत्कथनम् । मदुक्तिरेव सहचरीमुखादधिगता भवद्भिरिति तामेव कथयिष्यामि नान्यत्किमपीति व्यनक्ति । वाच यच्छेयम् —मौनिनी भवेयम् । प्रत्युत्तरम्–प्रतिवाचिकम्, न प्रयच्छेयम्–न प्रदद्याम् । *आधीनाम–मानसिकीना* व्यथानाम् । वनिताजन-वञ्चनम्–नारी-जन-प्रतारणम् । व्यर्थमर्यादाया –निष्प्रयोजनधार्मिकबन्धनस्य, विकत्थनम्–श्लाघनम् । धर्मरक्षणाद्युक्ति श्लाघामात्रम् । खिन्नजनखेदवारण हि सर्वतो बलीयान् धर्म, स नानुष्ठीयते भवता इति व्यज्यते ।

---

गई और महाराष्ट्रराज की वाणी से अपहृत-सी हो गई—तब उसने अपनी आँसूभरी आँखें पोछकर महाराष्ट्रराज के समक्ष कहना शुरू किया ।

"महाराज ! श्रीमान् को तो सब कुछ ज्ञात ही है, मेरा कथन तो पुनरुक्ति-मात्र होगा, फिर भी आपके बार-बार पूछने के बाद भी यदि आपको

महाराजस्तु ईदृशीं भङ्गीमाकर्ण्य, दिल्लीश्वर-दुहितुर्लोलताम्, निर्भीकताम्, अभीकताम्, चटुलताम्, चतुरताम्, कविताञ्च विभावयन् पुनरुवाच—"भद्रे ! विशकलय्य कथ्यताम्, कोऽनाचार प्रादर्शि जनेनैतेन ?"

रसनारी—महाराज ? किमिवाऽऽच्छन्दयसि ? विचित्रास्तव माया, विलक्षणास्तव घटना । यदा यदा मा साक्षात्करोषि तदा तदाऽनया तु मूर्त्याऽऽचार विनय मर्यादामेव च रक्षसि, किन्तु उत्थाय प्रस्थितोऽपि

---

भङ्गीम्–कथनप्रकारम् । लोलताम्–चपलताम् । निर्भीकताम्–निर्भयताम् । अभीकताम्–कामुकत्वम् । "कम्र कामयिताऽभीक कमन कामनोऽभिक" इत्यमर । चटुलताम्–चञ्चलताम् । चतुरताम्–कौशलम् । कविताम्–कवनशक्तिम् । विभावयन्–विचारयन् । अनाचार–दुर्व्यवहार । प्रादर्शि–प्रदर्शित ।

आच्छन्दयसि–मोहयसि, अनुरञ्जसि । माया–मोहनप्रकारा । घटना–कार्याणि, साक्षात्करोषि–पश्यसि । मूर्त्या–आकारेण । आचारम्–व्यवहारम् । विनयम्–नम्रताम् । मर्यादाम्–धार्मिकसीमानम् ।

---

उत्तर न देकर मैं मौन रह जाऊँगी तो मेरा बहुत बड़ा अपराध माना जाएगा । इस लिए मैं निवेदन कर रही हूँ । मेरी मनोव्यथा का कारण महाराज ही है । एक ओर तो वनिताओं की इस प्रकार की वञ्चना और दूसरी ओर धर्म-रक्षण की झूठी श्लाघा महाराज को शोभा नहीं दे रही है ।

राजकुमारी की इस प्रकार की व्यग्य वाणी सुनकर उसकी चपलता, निर्भीकता, कामुकता, चचलता, चतुरता और बोलने की कला पर विचार करते हुए महाराष्ट्रराज ने कहा—"भद्रे ! साफ-साफ बतलाओ—मैंने कौन-सा दुर्व्यवहार किया है ?"

रोशनआरा—"महाराज !" आप मुझे मोहित क्यों कर रहे है ? आपकी माया और आपकी क्रिया-विधि विलक्षण हैं । जब-जब आप मुझे देखने आते तब-तब तो आप अपनी इस आकृति से आचार, विनय एवम् मर्यादा का पालन ही किया करते है, परन्तु जब मेरे पास से उठ कर चल

मायामय्येव मूर्त्या चक्षुषोरग्रत एव वर्वर्त्ति। अहह! साहचर्य्यमेव न त्यजसि, सहैव पर्य्यटसि, सहैव भुङ्क्षे, सहैव च शेषे। निद्रायामपि मम कदाचिदशुकं स्पृशसि, कर्हिचित् कपोलयो स्वेदानपहरसि। केयं चातुरी यदेकया मूर्त्या मर्य्यादाया ध्वजं वहसि, परया चाचिन्त-नीयमाचरसि। हन्त! कुत आयासि? मुद्रित कवाट-युगलमपि नोद्घाटयसि, शृङ्खलामपि न चालयसि, सहचरीभिरपि नेक्ष्यसे, अनन्य-श्राव्यमालपसि, निभृतमेव वहसि, चित्र चित्र चित्रगतोऽपि च स्मयसे। अवलोकमवलोकं तवैता मायामत्यन्त विभेमि, खिद्ये,

मायामय्या–वशीकरणशक्तियुतया। वर्वर्त्ति–अतितरा तिष्ठसि। पर्य्य-टसि–भ्रमसि। अशुकम्–वसनम्। अपहरसि–प्रोञ्छसि। मर्यादाया ध्वजम्–धार्मिकमीम्नो वैजयन्तीम्। परा धार्मिकता प्रकटयसीति यावत्। अचिन्तनीयम्–अविचारणीयम्,। मुद्रितम्–पिहितम्, कपाटयुगलम् कपाटद्वयम्। "क (वा) पाटमरर तुल्ये" इत्यमर। शृङ्खलाम्–अररबन्धन-दाम, न चालयसि–न हिल्लोलयसि। कपाटोन्मुद्रणार्थं शृङ्खला सञ्चाल्य शब्दयन्ति जना इति लौकिकम्। अनन्यश्राव्यम्–अनितरश्रोतव्यम्। गुह्य-भाषणमिति यावत्। निभृतम्–गुप्तम्। स्मयसे–किञ्चिद्धससि। खिद्ये–

देते है तब तो आप अपनी मायामयी प्रतिमा को मेरी आँखो के सामने ही छोड जाते हे। अहा! आप मेरा साथ ही नही छोडते, साथ-साथ घूमते ह, साथ-साथ खाते हे और साथ-साथ सोते भी हे। कभी-कभी नीद मे भी आप मेरी साडी छू बैठते हे, कदाचित् दोनो गालो का पसीना पोछ देते है। यह कौन सी चतुरता है कि एक स्वरूप से तो धर्मध्वज उठाये हुए ह और दूसरे स्वरूप से ऐसा काम किया करते हे, जिसके बारे मे कोई सोच भी नही सकता? हाय! आप कैसे मेरे पास चुपके से आ जाया करते ह कि ये दरवाजे बन्द ही रह जाते ह, साँकल भी नही खट-खटाती, मेरी सहेलियाँ भी आपको नही देख पाती। एकान्त वार्त्तालाप भी किया करते ह और छिपे भी रहते है। सबसे आश्चर्य की बात तो यह है कि चित्रस्थ होने पर भी आप मुस्कराया करते हे। आपकी इस माया को बार बार देख कर मै डरती भी हूँ, खिन्न भी

उन्माद्यामि च । को वा न मुह्येदीक्षमाण ईदृक्षाणि विलक्षणानि इन्द्र-जालानि ? तत् समये समायातोऽसि, निवेदितवत्यस्मि निखिलमितिवृत्तम् । साम्प्रतन्तु न शक्नोमि जीवितुमिति पश्यत एव तव प्राणास्त्यजामि । स्मरणीयाऽहम्, कोऽप्यपराधश्चेत् भ्रमविहित स क्षन्तव्य —इत्युक्त्वाऽञ्चल-प्रान्तेनाऽऽत्मानमुद्बद्धमिव यतमाना, करे धृत्वा सान्त्वयन्, शीतलयंश्च पुनराह महाराष्ट्रराज —

भद्रे ! मुधैव मामुपालभसे । यदा गम्भीर निरीक्षिष्यसे परीक्षिष्यसे च, तदा स्पष्ट समीक्षिष्यसे यन्मात्राणुरपि दोषो मामकीन । श्रीमत्या

---

खेदिनी भवामि । इन्द्रजालानि—मायिकानि कार्याणि । इतिवृत्तम्—पूर्व-वृत्तम् । जीवितुम्—प्राणान् धर्तुम् । स्मरणीया—स्मृतिपथमानेतव्या । प्राण-त्यागानन्तर दर्शनासम्भवात् । भ्रमविहित —भ्रान्तिकृत । उद्बद्धु—पाशी-कर्तुम् । सान्त्वयन्—सामवचासि प्रयुञ्जान । शीतलयन्—शिशिरयन् ।

मुधा—व्यर्थम्, उपालभसे—उपालम्भ ददासि । निरीक्षिष्यसे—द्रक्ष्यसि, परीक्षिष्ये—विचारयिष्यसि, समीक्षिष्यसे—आलोचयिष्यसि । अणुरपि—लघु-

---

होती आ रही हूँ और यदा-कदाचित् उन्मत्त भी हो जाया करती हूँ ! इस तरह के विलक्षण इन्द्रजाल को देख कर कौन ऐसा व्यक्ति होगा जो मोहित नही होगा ? अब आप ठीक समय पर यहाँ आ गए है, मै सारी स्थिति बतला चुकी हूँ । अब मै जी नही सकती हू, इसलिए आपके समक्ष ही मै अपने प्राण छोड रही हूँ । यदा-कदाचित् आप मेरी याद करेंगे और यदि भ्रमवश मुझ से कोई अपराध हुआ हो तो कृपया क्षमा करेंगे"—यह कह कर अपने आँचल के फन्दे मे अपना गला देना ही चाहती थी कि महाराष्ट्रराज ने उसका हाथ पकड लिया और सान्त्वना देते हुए पुन उससे कहा ।

भद्रे ! तुम व्यर्थ ही मुझे उलाहना दे रही हो। जब तुम गम्भीर विचार-विमर्श करोगी तो तुम्हे स्पष्ट रूप मे ज्ञात हो जाएगा कि मेरा कुछ भी दोष नही है । दोष तो तुम्हारे हृदय, मन, अभिलाषा, यौवन, काम और प्रेम का है। मैं आज अपने को धन्य मान रहा हूँ कि ( पार्वतोन्दुरु ) पहाडी चूहे के रूप मे ( दिल्ली सम्राट् से ) उपाधि प्राप्त करने के बावजूद भी तुम दिल्ली

एव हृदयम्, मन , वाञ्छा, यौवनम्, काम रागश्चात्रापराध्यति। धन्यमात्मान मन्ये, यच्छ्रीमती दिल्लीवल्लभ-नन्दिनी गर्वमपहाय पार्वतेन्दुरुनाम्ना प्रसिद्धि गमितेऽपि मय्यनुरक्तवती। आनृण्य चास्यानुग्रहस्य मन्ये न कदाऽप्युपयास्यामि, परमिदमत्र विभावनीय पित्रा अप्रदीयमाना य कञ्चिदेवाङ्गीकुर्वती व्यभिचारिणी वचनीया च भवति वदावदानाम्। मातापितृभ्यामदत्तामात्मसात्कुर्वंश्च 'लम्पट' इति निन्द्यते। तदाज्ञा चेदत्रभवतीमह सादर स्वसेनया रक्ष्यमाणा कुशलेन तातभवन प्रापयामि, तातेनानुमता च मा सूचयिष्यसि। मदपक्षेयाऽप्यतिसुन्दरम्, अतिकमनीयम, अतिसम्पदम्, अतिप्रार्थनीयम्, तुरुष्का-

---

तमोऽपि। वाञ्छा–अभिलाप। यौवनम्–तारुण्यम्, राग–प्रेमा, अपराध्यति–अपराधहेतुर्भवति। धन्यम्–अतिश्रेष्ठम्। गर्वम्–अभिमानम्। अनुरक्तवती–प्रणय कृतवती। आनृण्यम्–ऋणशून्यत्वम्। अनुग्रहस्य–कृपाया। विभावनीयम्–विचारणीयम्, अप्रदीयमाना–अवितीर्यमाणा। अङ्गीकुर्वती–स्वीकुर्वती। व्यभिचारिणी–परपुरुपरता। वचनीया–निन्दनीया। वदावदानाम्–कथयितृणाम्। "वेदो वदावदो वक्ता" इत्यमर। आत्मसात्कुर्वन्–स्वाधीनता नयन्, लम्पट–परस्त्रीरत, कामुक। अनुमता–आज्ञप्ता, सूचयिष्यसि–बोधिष्यसि। अति-सुन्दरम्–अत्यन्तरूपिणम्। अतिकमनीयम्–

---

सम्राट की पुत्री होकर भी आज मुझसे इतना अनुरक्त हो। मै समझता हू कि तुम्हारे इस अनुग्रह के ऋण से मै अपने को कदापि मुक्त नही कर सकूगा। किन्तु इस प्रसग मे इतना विचार-विमश कर लेना चाहिए—पिता के द्वारा (विवाह मे) समर्पित हुये बिना ही यदि कोई स्त्री किसी व्यक्ति को अपने पति के रूप मे स्वीकृत कर लेती है तो लोग उसे व्यभिचारिणी तथा निन्दित स्त्री कहा करते है और स्त्री के माता-पिता द्वारा प्रदान किये बिना ही किसी स्त्री को आत्मसात् कर लेने वाला पुरुष भी 'लम्पट' कहा जाता है और लोग उसकी निन्दा किया करते है। अत यदि तुम्हारी आज्ञा हो तो मै आदरपूर्वक अपनी सेना के सरक्षण मे तुम्हे पिता के पास भेजवा दूँ और यदि वहाँ तुम्हारे पिता की अनुमति तुम्हे मिल जाय तो तुम मुझे सूचना देना। यदि अनुमति

ऽऽरव्य-पारस्यादिदेश-राजकुमारेषु वा अन्यतम वर वरयिष्यसि । मा स्म अकृतार्थमात्मान मस्था । यै पुण्यवलैर्दिल्लीवल्लभकुले जातासि, तैरेव कञ्चन चक्रवर्ति-कुमार वासन्त-वासन्तीव सहकार वरयिष्यसि ।

एवमालपद्भ्यामेव ताभ्यामन्वभावि कश्चन धूमगन्ध इव । यावच्चेतस्तत पश्यतस्तावद् गवाक्ष-द्वारेण प्रविशन् शुण्ड-शुण्डादण्ड इव चण्डो धूमोऽवलोकित । यावच्च तद्विचिन्तयितु यतते तावत् 'अग्निरग्निरग्नि, वह्निर्वह्निर्वह्नि, ज्वाला ज्वाला ज्वाले'ति प्रचण्डो ध्वनि

---

अतितरामर्थयितव्यम् । वरयिष्यसि–स्वीकरिष्यसि । अकृतार्थम्–अपूर्णमनोरथम् । वासन्तवासन्तीव–वसन्ते गृहीतजन्मा मालतीव । सहकारम्–रसालम् । उपमा । एव धर्मसमरक्षणप्रवणेन शिववीरेण प्रत्याख्याता रसनारी, किन्तु न सर्वथा प्रार्थयमानायाश्चिरस्कारोऽपि विधेय "स्त्रीणा वरमनुस्मरन्," "रामाया जातकामाया प्रशस्ता हस्तवारणा" इत्यादि वचनेभ्य इति बुबोधयिषु, अमङ्गलमयशस्यञ्च भावि विघ्नेनेति दु शकुन प्रदिदर्शयिषु रसनार्या परमभिष्टमालिङ्गन दैवप्रापितमिति च समर्थयितुमिच्छुरग्रेतन गद्य निगदति ।

अन्वभावि–अनुभवगोचरीकृत, अनवलोकितत्वादिव । पश्यत –अवलोकयत, प्रविशन्–गेहमाक्रामन् । शुण्डिशुण्डादण्ड इव–करिकरदण्ड इव । प्रचण्ड –अत्युत्कट । विचिन्तयितुम–कुत इति विवेचयितुम् । प्रचण्ड –

---

नही मिली तो मुझसे भी अधिक सुन्दर, अत्यन्त आकर्षक, अत्यन्त धनवान्, सुन्दरियो द्वारा अत्यन्त अभिलषित—तुर्क, अरब एवम् फारस देशो के राजकुमारो मे से किसी को चुन लेना । अपने को अकृतार्थ मत समझो । जिस परमपुण्य के प्रभाव से तुमने दिल्लीसम्राट् के कुल मे जन्म लिया है उसी के प्रभाव से तुम उसी प्रकार किसी चक्रवर्ती के सुपुत्र (या किसी चक्रवर्ती राजकुमार) को उसी प्रकार प्राप्त करोगी जिस प्रकार वसन्त-ऋतु मे उत्पन्न होने वाली मालती लता (मञ्जरित) आम्रवृक्ष को प्राप्त करती है ।

इसी तरह दोनो आपस मे बातचीत कर ही रहे थे कि उन्हे धूये की गन्ध भी लगी । जब वे दोनो इधर-उधर देखने लगे तो देखा कि खिडकी के बीच से हाथी की सूंड की तरह प्रचण्ड धूमशिखा घर मे प्रवेश कर रही थी । उसे देख कर दोनो तर्क-वितर्क कर ही रहे थे कि "अरे रे आग लग गई ।" इस

क्षुभितानामिव दौर्गिकाणा कोलाहल । तत्कोलाहल-श्रवणसमकाल-मेवात्युद्विग्ना रसनारी त्रायस्व त्रायस्वेति ता तथा भीत-भीता किञ्चि-दुदञ्चिताभ्या कुचाभ्या वक्षस्थल पीडयन्ती बाहुपाश-वेष्टितग्रीवा सवेपथु गाढमाश्लिष्टामवलोक्य, मा भैपीरित्यभिधाय, कराभ्या क्रोड उत्थाप्य, सपदि द्वार-देशान्निस्सृत्य वहिरायात । सहचर्योऽपि च कान्दिशीका भय-भ्रान्त-नयना 'भट्टारक ! भट्टारक ! भट्टिनि ! भट्टिनि !' इत्युच्चै प्लुतेनेव स्वरेणाऽऽकारयन्त्यस्त्रैव समागमन् ।

---

बहुलीभूत । क्षुभितानाम्–व्याकुलानाम् । भयभ्रान्तानामिति यावत् । कोला-हल –कलकल । अत्युद्विग्ना–अतितरा भीता । त्रायस्व त्रायस्व–पाहि-पाहि । बाहु-लताभ्याम्–भुजव्रततीभ्याम् । रूपकम् । अवेष्टयत्–आच्छा-दयत् । उदञ्चिताभ्याम्–उन्नताभ्याम् । वक्षस्थलम्–उरस्थलम्, महा-राजस्य । पीडयन्तीम्–आनन्दवर्षिणी पीडामुद्भावन्यतीम् । बाहुपाश-वेष्टितग्रीवाम्–भुजवन्धयन्त्रितशिरोधराम् । सवेपथुम्–सकम्पाम् । मा भैषी –भय न विधेहि । कान्दिशीका –भयद्रुता । भयभ्रान्त-नयना –भीत्यु-द्घूर्णमाननेत्रा । प्लुतेन–त्रिमात्रिकेण । आकारयन्त्य –आह्वयन्त्य ।

एना कथा समुपस्थाप्य सर्वोऽप्यग्रेतन शिवराजचारकीकरणादिरूपो दुर्य-शोन्नातो रसनारीस्नेहजन्मेति बोधयति । दिल्लीगमन–सन्धित्सादावप्ययमेवानु-राग कथोपकथनादिश्चान्तरङ्गीभूतो हेतुरिति विवेचनीय सुधीभि ।

---

तरह का व्याकुलित दुर्गरक्षकों का भयङ्कर कोलाहल सुनाई पडा । कोलाहल सुनते ही रोशनआरा ने "बचाइये !" कहती हुई शिवाजी को दोनो बाँहो से आलिङ्गित कर लिया । महाराज ने भी अत्यन्त सन्त्रस्त, अल्प-विकसित स्तन-द्वय से अपने वक्षस्थल को दबाने वाली और गले को बाहुपाश से वेष्टित करने वाली रोशनआरा को कम्पन पूर्वक गाढालिङ्गन करती हुई देख कर, "डरो मत, !" कहकर अपने दोनो हाथो से उसे अपनी गोद मे उठा लिया और झट से बाहर निकल आये । तत्पश्चात् उच्च स्वर से सन्त्रस्त और डर से घूमती आँखो वाली रोशनआरा की सहेलियाँ भी "भट्टारक ! भट्टिनी, भट्टिनी !" इस तरह पुकारती हुई वहाँ आ पहुँची ।

महाराज —दीनवन्धो ! भवादृशेषु सहायेषु कथमेव सम्भवति ?

जयपुरराज —अह वृद्धोऽस्मि। न चिर जीवामि। यावतीना प्रजानाञ्च हृदये जाज्वल्यते वैरवह्नि । एतदीया मण्डलशासका अनुचरा अपि गूढ विद्विषन्ति। कथ शासनमुरीकरणीयमिति वहुश एन पत्रद्वारा बोधितवानस्मि। नैषोऽस्मदुपदेशाञ्छृणोति, प्रजा पीडयति, वान्धवेष्वपि वैरायते, निज-धर्म-धुर्याणा मौलिवीनामपि च न कर्णे करोति वाच । आसन्न-विनिपातानि भवन्तीदृश-शासकाध्युषितानि सिहासनानि।

---

यावतीनाम्—समस्तानाम् । मण्डलशासका –भूखण्डरक्षका , "सूवेदार, नवाव" इत्यादिपदवाच्या । गूढम्–अप्रकटम्, विद्विषन्ति–शत्रुत्वमाचरन्ति। पत्रद्वारा–लेखादिना । महाराजजयसिंहेन "अवरङ्गजीव" सम्बोध्य लिखितमेक पत्र तन्मुद्राङ्कित काशीस्थागवालश्रेष्ठिरामनारायणदासमहोदयाना निकट आसीत् । तद् यथास्थित भारतेन्दुहरिश्चन्द्रमहाशयेन प्राप्तम्, तच्च शिवराजविजयकारेण साक्षादवलोकितम्, भारतेन्दुना च निजे "वादशाह-दर्पण"-नामधेये पुस्तके प्रकाशितमिति मूलकारानुमोदिता च टिप्पणी। वान्धवेषु–भ्रातृषु। अवरङ्गजीवकर्तृक भ्रातृवधादि नातितिरोहितमितिवृत्तविदाम् । आसन्नविनिपातानि–सन्निकटविनाशानि ।

---

विश्वनाथ आदि मन्दिरो के पास वने वडे-वडे मस्जिदो मे उल्लू भयङ्कर घूङ्कारात्मक शब्द करेगे। हसिनियो, छिपकिलियो तथा कोओ की क्रीडा होगी और चमगादड विष्ठा से उन मस्जिदो को गन्दे करेगे।

महाराज—दीनवन्धो ! आप जैसे वीरो की सहायता मिलते रहने पर यवन की यह दशा कैसे सम्भावित है ?

जयपुरराज—म वृद्ध हूँ। अव अधिक दिनो तक मै जीने वाला नही हूँ। दूसरी वात यह भी है कि समस्त प्रजाओ के हृदय मे शत्रुता की ज्वाला धधक रही है। इनके सेवक जिलाधीश या प्रान्ताधिपति भी इनसे वहुत द्वेष कर रहे है। किस प्रकार का शासन चलाना हितकर होगा—इस विषय को मै पत्रो द्वारा अनेक वार यवनसम्राट् को समझा चुका हूँ। परन्तु मेरे उपदेशो की

महाराज —शान्त पापम्! प्रतिहतममङ्गलम्!! चिर जीवतु महाराज!! [ क्षण द्वावपि तूष्णीं स्थितौ पश्चाच्च पुन किञ्चिद्विचार्य प्रोवाच महाराष्ट्रराज ] अह चिरमयुध्ये—इति दिल्लीश्वर कथं मैत्र्या वर्तिष्यते—इति संशये।

जयपुरराज —भवन्तमतिमात्रमित्र मस्यते दिल्लीश्वर, यदि भवान् तस्य किमपि कार्यं साधयेत्।

महाराज — कि तत् ?

जयपुरराज —कार्यत्रयमुपस्थितमस्ति।

महाराज —कि किम् ?

जयपुरराज —प्रथमतस्तु गोलखण्डमायाते दिल्लीश्वरे तत्समीपमागच्छन्ती तद्दुहिता श्रीमती रमनागी मार्ग एव कैश्चन लुण्ठकैरपहृता, साऽन्वेषणीया।

---

अयुध्ये–समग्रामयम्, आत्मनेपदे लडुत्तमपुरुषे। मैत्र्या–मित्रतया, वर्तिष्यते–व्यवहरिष्यति। संशये–सन्दिग्धे, लडुत्तमैकवचनम्।

---

उपेक्षा कर वे प्रजाओ को पीडित कर रहे ह, मित्रो के साथ भी शत्रुवत् आचरण किया करते ह, यवन-धर्मशास्त्र मे निपुण मालवियो की बाते भी नही सुन रहे ह। इस तरह के शासको से अधिष्ठित राज्यसिंहासन का पतन निकटभावी होता हे।

महाराज—पाप की शान्ति हो चुकी। अमङ्गल का विनाश हो चुका। महाराज चिरायु हो।

[ थोडी देर तक दोनो ही चुप रहे, बाद मे कुछ सोच-विचार कर महाराष्ट्रराज ने पुन कहा—] मैने तो चिरकाल तक दिल्लीसम्राट् से युद्ध किया है–इसलिये मुझे सन्देह हो रहा हे कि वे मेरे साथ मैत्री करने को तैयार होगे।

जयपुरराज—यदि आप दिल्ली सम्राट् का कुछ काम सिद्ध कर देगे तो वे आपको बहुत बडा मित्र मानने लग जायेगे।

महाराज—कौन सा काम ?

जयपुरराज—सम्प्रति तीन काम प्रस्तुत ह।

महाराज—कौन-कौन सा ?

महाराज —[ मनस्येव प्रसीदन् ] द्वितीयम् ?

जयपुरराज —द्वितीयतो भवतैव सह योद्वु प्रस्थितो राजकुमारो मायाजिह्म कुत्राप्यटवीष्वपभ्रष्ट , स तु नाद्यापि लब्ध –इति सोऽपि मार्गणीय ।

महाराज —[ मनसि स्मयमान इव ] आम् ! तृतीयम् ?

जयपुरराज —तृतीयतस्तु विजयपुरेश्वरेणाऽऽहवोऽनुष्ठेय ।

महाराज – [ सहर्षम् ] एतत् त्रयमपि साधयिष्यामि ।

जयपुरराज —इतोऽप्यधिक कि नाम स्यात् कारण तोषस्य ? पर विजयपुराधीशेन योत्स्यते भवानिति न सन्देह , किन्तु शिष्ट कार्यद्वय साधयिष्यत्येव-इति कथ विश्वस्याम् ।

---

अटवीषु–अरण्येषु । अपभ्रष्ट –मार्गच्युत । मार्गणीय –अन्वेषयितव्य ।

आहव –सङ्ग्राम ।

विश्वस्याम्–विश्वास कुर्याम् । दुष्करत्वादित्यविश्वास ।

---

जयपुरराज—पहला काम तो यह है कि दिल्लीसम्राट् के गोलखण्ड आने पर उनके पास आती हुई उनकी लडकी रोशनआरा को कुछ लुटेरो ने गायब कर दिया है, अब उसे ढूढ लाना है ।

महाराज—[ मन ही मन प्रसन्न होते हुये ] दूसरा काम क्या है ?

जयपुरराज—दूसरा काम यह है कि आप ही के साथ युद्ध करने के लिये प्रस्थित राजकुमार मुअज्जम किसी जङ्गल मे भटक गये है और आज तक भी वे उपलब्ध नही हो पाये है । अत उन्हे भी खोजना है ?

महाराज—[ मन मे कुछ हँसते से ] अच्छा ! तीसरा काम क्या है ?

जयपुरराज —तीसरा काम यह है कि बीजापुर के महाराज के साथ दिल्लीसम्राट् की ओर से युद्ध करना है ।

महाराज—[ हर्ष-पूर्वक ] ये तीनो ही काम मै कर दूँगा ।

जयपुरराज—बस ! तो इससे अधिक दिल्लीसम्राट् की प्रसन्नता का कारण क्या होगा ? विजयपुरेश्वर के साथ आप बादशाह की ओर से युद्ध करेगे, यह तो असन्दिग्ध है, परन्तु अन्य दो काम कर ही लेगे, यह विश्वास मै कैसे करूँ ?

तत शनै शनैरुभयोर्वहव आलापा सञ्जाता । परिशेषे च जयपुराधीशेनोक्तम्—सर्वमवगतवानस्मि । श्व एव मार्याजिह्म रमनारी चात्र प्रेषयतु, यथा स्वपत्रेण सह तौ दिल्ली प्रेषयामि । अत्रभवति चात्यन्त दिल्लीश्वरस्य तोष सम्पादयामि ।

महाराज —यदाज्ञाप्यते ।

जयपुरराज —स्वीकृता भवताऽधुना सकरप्रदता मैत्री ?

महाराज —सर्वोऽपि भवदादेश शिरोधार्य ।

ततो जयपुराधीश्वर प्रतिष्ठासमान महाराष्ट्रराज सप्रेम सम्बोध्य प्रोक्तवान्—अस्तु, साम्प्रत जिगमिषति भवान् चेदास्माकीना भटा भवन्तमनुगच्छन्त सिहदुर्गपर्य्यन्त कुशलेन प्रापयिष्यन्ति । स तु आर्य ! परमुपकृतोऽस्मि सकरुण-भाषणेनानेन । रात्रौ एकाकिभ्रमणमेवातितरा रोचते मह्यम् । त्वरितगामी आजानेयो बहिरस्ति, क्षणेन मा नेष्यति—इति सप्रश्रयमुक्तवान् ।

---

अत्रभवति—माननीये भवति । तोषम्—प्रसन्नताम् ।

सकरप्रदता—सबलिविश्राणनता ।

प्रतिष्ठासमानम्—प्रस्थातुकामम् । सप्रेम—सानुरागम् । एकाकी भ्रमणम्—एकलचरणम् । त्वरितगामी—शीघ्रगति ।

---

तदनन्तर उन दोनो के बीच शनै शनै बहुत बातचीत हुई । अन्त मे जयपुराधीश ने कहा—मै सब जान चुका । कल रोशनआरा तथा मुअज्जम को आप यहाँ भेज दे ताकि मै अपने पत्र के साथ उन्हे दिल्ली भेज सकू और आपके प्रसङ्ग मे दिल्लीश्वर को अत्यन्त प्रसन्न भी कर सकू ।

महाराज—आपकी जैसी आज्ञा हो ।

जयपुरराज —अच्छा तो अब आप कर देने के साथ-साथ बादशाह के साथ अपनी मैत्री को स्वीकृत कर चुके ?

महाराज—आपका प्रत्येक आदेश शिरोधार्य ह ।

तत्पश्चात् जयसिह ने वहाँ से प्रस्थान करने के इच्छुक महाराष्ट्रराज को प्रेमपूर्वक सम्बोधित करते हुए कहा—अस्तु, यदि आप इस समय यहाँ से जाना चाहते है तो मेरे भट आपको यहाँ से सिहदुर्ग तक पहुँचा देगे । उस पर

तत उत्थाय, ससादरमम्भाषण प्रचलिते शिवराजे अम्बरेश्वरोऽपि द्वारपर्य्यन्तमागत्य आश्लिष्य विसृज्य च स्वयमन्त प्रविवेश।

महाराष्ट्रेश्वरोऽपि निजमाजानेयमारुह्य निवृत्त, गूढवेषैरनेकैरात्मीयैरनुगम्यमानश्च, क्षणेन सिंहदुर्गमागत्य, जनन्या सह विविधैरालपैश्चिर विहितजागर, मन्थरैरङ्गैश्चिन्तासन्तानैकतान एव सुष्वाप।

अथान्येद्यु प्रातरेव तोरणदुर्ग प्रविश्य रसनारीमकथयद् यद्-भद्रे! कष्टमुपस्थित महाराष्ट्रदेशे, यदेष जयपुराधीश्वरो भवत्या पित्रा प्रेषित कटकाना कोटिभिर्योद्धमायातोऽस्ति। न जाने भवत्यास्तातचरण किमित्येव युद्धलोलुपोऽस्ति। वीराणा बहूनि लक्षाणि अस्मत्कोपकृशानुषु दग्धानि। इतोऽपि च न शाम्यति भवत्या पितुर्युयुत्सा।

---

गूढवेषै –गुप्तनेपथ्यै। जनन्या–मात्रा। विहितजागर –अलब्धनिद्र। मन्थरै –सालस्यै। चिन्तासन्तानैकतान एव–चिन्तनततिनिमग्नान्तरङ्ग एव। सुष्वाप–निद्रा भेजे।

अन्येद्यु –परस्मिन् दिवसे। कष्टम्–खेद। कटकानाम्–सेनानाम्। कोटिभि –अनेककोटिभि। अत्र कोटिशब्दो बहुत्वपर, समूहैरित्यर्थ। युद्धलोलुप –सङ्ग्रामलुब्ध। अस्माक कोपा एव कृशानवस्तेषु। रूपकम्। दग्धानि–प्लुष्टानि। युयुत्सा–योद्धुमिच्छा।

---

महाराष्ट्रराज ने विनयपूर्वक कहा—आर्य! आपकी इस करुणापूर्ण वाणी से मैं अत्यन्त अनुगृहीत हूँ। किन्तु रात मे मुझे अकेला चलना ही अच्छा लगता है। साथ ही बाहर एक शीघ्रगामी अच्छा घोडा भी बँधा है जो क्षण भर मे ही मुझे वहाँ पहुँचा देगा।

तदनन्तर वहाँ से उठकर सादर सम्भाषण कर वहाँ से शिवराज के प्रस्थान करने के बाद अम्बर देशाधीश्वर भी उनके साथ दरवाजे तक आये और आलिङ्गनपूर्वक उन्हे विदाई देकर पुन शिविर के भीतर लौट गये।

इधर महाराष्ट्रराज भी अपने तेज घोडे पर सवार होकर गूढ वेषवाले अपने अनेक बन्धुओ के साथ शीघ्र ही सिंहदुर्ग मे प्रवेश कर, अपनी माता के साथ वार्तालाप करने मे चिरकाल तक जगने के कारण शरीर मे आलस्य आ जाने से विविध चिन्ताओ म निमग्न होकर ही सो गए।

मया निगृहीताऽपि भवती केवल सत्कृता। मया वशे कृतोऽपि च भवत्या भ्राता केवलमादृत । तातचरणश्च भवत्या एव मैत्रीमपि दर्शयति मयि शत्रुतयैव च व्यवहरति, नेद भद्रोचित कार्यम्।

तदाकर्ण्य सनिश्वास सचकित च प्राह रसनारी-तत्कि भ्राता मे भवत्कारागारे निगडबद्ध ?

महाराज —भद्रे! नास्माभिरीदृशा निगडै किन्तु प्रेम्णा बद्धयन्ते। मया स्वपुत्र इव सोऽपि महाप्रासादे स्थापितोऽस्ति।

रसनारी—कतमोऽसौ भ्राता ?

---

आदृत —सत्कृत । दर्शयति—प्रकटयति । सप्तमीविभक्तौ एकवचन शत्रन्तम्। भद्रोचितम्—श्रेष्ठजनयोग्यम्।

भवत्कारागारे—भवत्कारके। निगडबद्ध —शृङ्खलायन्त्रित ।

ईदृशा —महोदया । बद्धयन्ते—यन्त्र्यन्ते, स्वायत्तीक्रियन्त इति यावत्।

---

दूसरे दिन सबेरे ही तोरणदुर्ग मे प्रवेश कर उन्होने रोशनआरा से कहा—भद्रे! महाराष्ट्र देश पर सङ्कट आ गया है, क्योकि आपके पिता द्वारा भेजे गये महाराज जयसिंह बहुत बडी सेना के साथ मुझ से लडने आ चुके है। मैं नही समझ पाता कि आपके पिताजी युद्ध करने के लिये इतने उत्सुक क्यो है ? आपके पिता के करोडो वीर हमारे कोपानल मे दग्ध हो चुके है, फिर भी आपके पिता की लडने की इच्छा शान्त नही हो पा रही है। देखिये—आपको कैद करने के बाद भी मैने आपका केवल सत्कार किया है। वशीकृत होने पर भी मै आपके भाई का आदर ही करता रहा हूँ। किन्तु इस प्रकार मित्रता दिखलाने वाले मेरे साथ भी आपके पिता जी शत्रुता-पूर्वक व्यवहार ही किया करते है। यह कार्य भले आदमी जैसा नही है।

उक्त वचन सुन कर रोशनआरा ने निश्वास एव आश्चर्य के साथ कहा—तो क्या मेरे भाई आपके कारागार मे बेडी मे बँधे है ?

महाराज—भद्रे! इस तरह के लोगो को हम लोग बेडियो मे नही, अपितु प्रेम के बन्धन मे ही बाँधते है। मैने अपने पुत्र के समान ही आपके भाई को भी राजभवन मे ही रक्खा है।

महाराज —कुमार-मायाजिह्म ।

रसनारी—कथमत्राऽऽयात ?

महाराज —सोऽस्माभिर्योद्धुमायात आसीत् ।

रसनारी—अथ किम् ?

महाराज —अथ सुन्दरस्य यून कुमारस्य हत्यामनिच्छद्भिरास्माकीनै कथमपि स्वहस्तगत एव कृत ।

रसनारी—अथ तस्य स्वच्छन्द प्रचारो रुद्धो वा ?

महाराज —न किमपि । स्वच्छन्द सोऽस्मासु विचरति ।

रसनारी—[ सास्रम् ] चिराय नापश्यमह तातमायाजिह्मम्, तद् दर्शयतु भवान् सपदि मे भ्रातरम् ।

महाराज —मुहूर्त्तेन द्रक्ष्यति भवती । [ इत्युत्थाय दुर्गाध्यक्ष तमानाययितुमादिश्य, पुनरुपविश्य ] गतदिवसेऽह जयपुराधीशस्य शिबिर गत्वा वहुश सन्धिवार्त्ता कृतवानस्मि, किन्तु ।

---

स्वच्छन्दम्—सस्वातन्त्र्यम् । प्रचार —भ्रमणम् ।

---

रोशनआरा—मेरे कान से भाई ह ?

महाराज—राजकुमार मुअज्जम ।

रोशनआरा—वे यहाँ कैसे आए थे ?

महाराज—हम लोगो के साथ लडने के लिए ही वे यहाँ आए थे ।

रोशनआरा—तो फिर क्या हुआ ?

महाराज— ऐसे सुन्दर युवक राजकुमार की हत्या नही करने की इच्छा वाले हम लोगो ने किसी प्रकार उन्हे पकड ही लिया ।

रोशनआरा—तो क्या उन्हे घूमने-फिरने मे स्वच्छन्दता दी गई है या नही !

महाराज—कोई रुकावट नही हे । वे तो हम लोगो के साथ स्वच्छन्द होकर घूमते-फिरते हैं ।

रोशनआरा—[ रोती हुई ] मै अपने प्यारे भाई मुअज्जम को चिरकाल से नही देख पाई हूँ । अत आप अभी उनसे मेरी भेट करा दे ।

रसनारी — किं सन्धिं नाङ्गीकरोति ?

महाराज —अङ्गीकरोति, किन्तु ।

रसनारी—आम्, कथ्यतां किमीहते सेनापतिः ?

महाराज —सेनापतिर्भवत्या एवाधीनं मनुते ।

रसनारी—उच्यतामुच्यताम् । अद्यैवाऽहं गत्वा तं युद्धाद् वारयिष्यामि, प्रतिनिर्वर्तितुञ्च वक्ष्यामि । कथ्यतां किं तेनोक्तम् ?

महाराज —राजकुमारि ! स वक्ति यद्–"महाराजाधिराजो दिल्लीश्वरः कुमार्याः कुमारस्य च पदवीमलभमानोऽत्यन्तं चेखिद्यते । यदवधि स भवतो प्रनष्टतामश्रौषीत् तदारभ्य मित्रैर्न हसति, राजसभां नाधितिष्ठति, कलाकौशलानि नावधत्ते, आलापमूर्च्छना न शृणोति, उद्यानेष्वपि च न पर्य्यटति, 'हा वत्स ! मायाजिह्म !! हा वत्से !! रसनारी !!'–इति समाक्रन्द-विलपितोद्भूतैर्वाष्पैरेव श्मश्रु

---

अधीनम्–आयत्तम् । मनुते–जानाति ।

प्रतिनिर्वर्त्तितुम्–दिल्ली गन्तुम् । वक्ष्यामि–कथयिष्यामि ।

पदवीम्–पन्थानम् । चेखिद्यते–अतितरां क्लिश्नाति । प्रनष्टताम्–अदृश्यताम् । नाधितिष्ठति–नाश्रयति । "अधिशीङ्स्थासां कर्म"ति सभाशब्दस्य कर्मसंज्ञा । नावधत्ते–न विवेचयति । समाक्रन्दात्–रोदनात् । विलपितात्–सशब्दरोदनाच्च, उद्भूतैः–सञ्जातैः । वाष्पैः–अस्रैः । श्मश्रु–उत्तरोष्ठो-

---

महाराज—थोडी ही देर मे आप उनसे मिलने वाली है [ यह कह कर उठ गए और दुर्गाध्यक्ष को कुमार मुअज्जम को वहाँ बुलाने की आज्ञा देकर पुन बैठ कर ] कल मैंने जयपुराधीश्वर के शिविर जाकर उनसे बहुत प्रकार से सन्धि की बातचीत की है, किन्तु ।

रोशनआरा—क्या सन्धि की बात वे नही मान रहे है ।

महाराज—मान तो रहे है, किन्तु ।

रोशनआरा—अच्छा तो कहिए सेनापति क्या चाहते है ?

महाराज—सेनापति महाशय तो ( इस कार्य को ) आप के अधीन ही मानते है ।

रोशनआरा—कहिए कहिए । आज ही मै जा कर उन्हे युद्ध करने से

कूर्चश्च स्नपयति। तत्रभवती महिषी, अन्या भोगिन्यश्च हाहाकारैरेव समयं गमयन्ति।"

रसनारी—[ साश्रुपातम् ] हा तात ! हा मात !! [ इति रोदिति ]

महाराज—समाश्वसितु समाश्वसितु भवती, शीघ्रं द्रक्ष्यति भवती पितरौ।

ततश्चिरं यावत् सान्त्वनामयं नीतिगर्भं दर्शित-पितृस्नेह-वर्षश्चाऽऽलपत् कुमार्या सह महाराष्ट्राध्यक्ष, तावत् प्रतीहार्या प्रविश्योक्तम्—'भगवन् ! दिल्लीश्वरकुमार समायाति'—इति स तु श्रुत्वैवोत्थाय बहि-

---

परिस्थितां रोमराजिम्। कूर्चम्—चिबुकप्ररूढां रोमावलिम्। महिषी—पट्टराज्ञी। भोगिन्य—इन्द्रियतृप्तिमात्राय मङ्गीकृता। "कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः" इत्यमर।

द्रक्ष्यति—अवलोकयिष्यति। माता च पिता च पितरौ। "पिता मात्रा" इत्यनेनैकशेष।

सान्त्वनामयम्—सामप्रचुरम्। प्रतीहार्या—दौवारिक्या।

---

रोक दूंगी और यहां से लौट जाने को भी कहूंगी। कहिए—उन्होंने क्या कहा है ?

महाराज—राजकुमारी ! सेनापति कह रहे हैं कि महाराजाधिराज दिल्ली-वल्लभ आप तथा राजकुमार मुअज्जम के न मिलने से अत्यन्त खिन्न हैं। जब से उन्होंने आप दोनों के खो जाने की बात सुनी है तब से वे अपने मित्रों के साथ हँसते भी नहीं, राजसभा में भी नहीं बैठते, कला-कौशल की ओर भी ध्यान नहीं देते, संगीत की मूर्च्छना को भी नहीं सुनते, उद्यान में भी नहीं घूमते और 'हाय बेटा ! मुअज्जम !, हाय बेटी ! रोशनआरा !' इस प्रकार रोने बिलखने से उत्पन्न अश्रुधारा से अपनी मूंछ-डाढी को नहलाते रहते हैं। सम्मान्य महारानी तथा अन्यान्य रानियाँ भी 'हाय ! हाय !' करके ही किसी प्रकार समय बिता रही हैं।

रोशनआरा—[ आँसू बहाती हुई ] हाय पिता जी ! हाय प्यारी माँ ! [ यह कहती हुई पुन रोने लग गई ]।

महाराज—आप धैर्य-धारण करें, शीघ्र ही आप अपने माता-पिता को देखेंगी।

निर्गत्य त प्रणमन्तमालिङ्ग्य, एकाकिनमन्त प्रावेशयत्। तत्र स भगिनीमवलोक्य कथ चमच्चकार, कथ वा ताभ्या परस्पर प्रेमभारा विभराम्बभूविरे, कामिर्वा कथाभि कतिचन क्षणा अतिवाहयाञ्चक्रिरे-इति नाय लेखनीविषय ।

कियत्क्षणानन्तर स्वस्वागमन-गाथामुदीर्य तौ द्वावपि महाराष्ट्र-राज-प्रशसा परवशौ बभूवतु । उभाभ्या निरचायि च यद्गत्वैव दिल्लीनगरी दृढ तातचरणोऽभ्यर्थनीयो महाराष्ट्रराजेन सह सन्धातुम् । कुमारेणोक्तम्—"भगिनि ! तात शत्रु-सम्बन्धिनो निगृह्य पशुमार मारयति । महाराष्ट्रमेघवाहनश्चास्मादृक्षान् प्राप्यापि प्रेम-पूर-प्रवाहे-

---

निर्गत्य—नि सृत्य । एकाकिनम्, स्वयमप्यप्रविश्येति चातुर्यस्य परा,काष्ठा । चमच्चकार—चमत्कृतोऽभूत् । प्रेमभारा —गाढस्नेहा । विभराम्बभूविरे—दध्रिरे । अतिवाहयाञ्चक्रिरे—व्यतियापयाञ्चक्रिरे । लेखन्या विषयो न-वक्तुमनर्ह इति तत्त्वम् । केवलानुभवैकमात्रवेदितव्य इति यावत् ।

स्वस्वागमनस्य गाथाम्-कथाम् । उदीर्य—निगद्य । निरचायि—निश्चय कृत । सन्धातुम्—मैत्री विधातुम् । शत्रुसम्बन्धिन —रिपुसम्पर्किण । पशुमार मारयति—यथा पशून् हन्ति तथेत्यर्थ । महाराष्ट्रमेघवाहन —महाराष्ट्रेन्द्र ।

---

तदनन्तर चिरकाल तक महाराष्ट्रराज राजकुमारी के साथ सान्त्वनापूर्ण, नीति-गर्भित तथा माता-पिता के स्नेहप्रवाह को बहाने वाली वार्ता करते रहे। इसी बीच वहाँ आकर प्रतिहारी ने कहा--भगवन् ! दिल्ली-सम्राट् के सुपुत्र आ रहे है। यह सुनते ही शिवाजी ने उठकर बाहर निकल कर, प्रणाम करते हुए राजकुमार का आलिंगन कर उन्हे अकेले ही अन्दर भेज दिया। अन्दर जाने पर वहाँ अपनी बहन रोशनआरा को देख राजकुमार कितना चमत्कृत हुआ, उन दोनो का पारस्परिक गाढ प्रेम कितना प्रस्फुटित हो उठा और किस-किस प्रकार की वार्त्ता से उन दोनो के कुछ क्षण बीते---इसका उल्लेख नही किया जा सकता ।

थोडी देर के बाद अपने-अपने वहाँ आ जाने की गाथा परस्पर सुना कर वे दोनो महाराष्ट्रराज की प्रशसा करने मे लीन हो गए। उन दोनो ने यह निश्चय कर लिया कि दिल्ली जाते ही वे दोनो अपने पिता से महाराष्ट्रराज

रेव परिपोषयति—इति स्पष्टं कथयिष्यामि तातमेतेन युद्धं शमयितुम्" । तत उक्तं कुमार्या यद्—भद्र ! श्रूयते महत्या सेनया जयपुरेश्वरो महाराष्ट्राञ्छलभनाशं प्रणाशयितुं प्रेषितोऽस्ति ।

मायाजिह्व —आ ! अधुनैव गत्वा निवारयामि जयपुरेश्वरम् ।

रसनारी—भद्र ! श्रूयते युद्धमधुनाऽपि नाऽऽरब्धवान् । सन्धिश्च प्रस्तूयते ।

ततः पित्रोर्दुःखविषयेऽपि सास्रं कथितवती कुमारी । कुमारोऽपि सबाष्पमाकर्ण्य, बहिरागत्य महाराजं प्रणम्य, सगद्गदमुवाच—महाराज ! श्रीमतः स्नेहस्य चिराय ऋणी संवृत्तोऽस्मि, कुशलिनीं भगिनीमालोक्य चोपकारभाराक्रान्तं शिरोऽप्युन्नमयितुं न शक्नोमि । न जाने कैर्व्यवहारैरानृण्यं प्राप्स्यामि ?

---

"तुरापाण्मेघवाहनः" इत्यमरः । प्रेमपूर-प्रवाहैः—अनुरागधाराभिः । एतेन—शिवराजेन, सह । शलभनाशं प्रणाशयितुम्—शलभमिव नाशयितुम् । शलभानिवानायासेन नाशयितुम् । "उपमाने कर्मणि च" इति णमुल् ।

प्रस्तूयते—प्रस्तावविषयता नीयते ।

सगद्गदम्—अविस्पष्टाक्षरम् । उपकार-भारेण—उपकृतिभरेण, आक्रान्तं—निम्नीकृतम् । उन्नमयितुम्—उत्थापयितुम् । आनृण्यम्—ऋणराहित्यम् ।

---

के साथ सन्धि कर लेने के लिए दृढतापूर्वक अभ्यर्थना करेंगे। बाद मे राजकुमार ने पुनः कहा—"प्यारी बहन ! पिता जी तो शत्रु-पक्ष के व्यक्तियो को पकड कर पशुओ की तरह मार डालते है। परन्तु हम लोगो को प्राप्त करने के बावजूद भी महाराष्ट्रराज हमलोगो को अपने प्रेमप्रवाह से ही समृद्ध कर रहे है—इसलिए पिता जी से इनके साथ युद्ध न करने के लिए स्पष्ट शब्दो मे निवेदन करूँगा।" इस पर राजकुमारी ने कहा—'भइया ! मैने सुना है कि बहुत बडी सेना के साथ जयपुर के महाराज को महाराष्ट्रियो को कीडे की तरह मसल देने के लिए पिता जी ने यहाँ भेज दिया है।'

मुअज्जम—अच्छा, मै अभी-अभी जाकर जयपुराधीश को रोक दे रहा हूँ।

रोशनआरा—भइया ! सुना है कि अब तक युद्ध का प्रारम्भ नही हुआ है और सन्धि की बातचीत चल रही है।

महाराज —आयुष्मन्! कथ न कथये ? महता कुमारोऽस्मि। किन्तु साम्प्रत जयपुरपुरन्दरो योद्धुमायातोऽस्ति। विहितसन्धिप्रस्तावे च मयि कथितवान्—यद् "यदि कुमारी कुमारश्च सुखेन दिल्लीश्वरान्तिक व्रजेताम् तदवश्य सन्धास्यति महाराजाधिराज" इति। स च शिविरस्थ कुमार प्रतीक्षते।

मायाजिह्व —एष प्रतिष्ठे यद्यनुमन्ये। अवश्य सन्धानीय तातेन। अन्यथा नाह तस्य, न स मम।

---

प्रतिष्ठे-प्रस्थान करोमि। सन्धानीयम्-सन्धातव्यम्।

---

तत्पश्चात् अपने पिता के दुख के बारे मे भी आँसू बहाती हुई राजकुमारी ने अपने भाई से कहा। आँसू बहाते हुए राजकुमार ने भी पिता की दुरवस्था को सुन कर, बाहर निकल कर महाराष्ट्रराज को प्रणाम कर गद्गदस्वर से कहा—महाराज! आपके स्नेह प्रदर्शन के लिए मैं सब दिन के लिए आपका ऋणी हो चुका हू। साथ ही अपनी बहन को भी सकुशल देख कर आपके उपकार के भार से मैं इतना दब चुका हू कि मै अपना मस्तक भी आपके समक्ष उठाने मे समर्थ नही हो पा रहा हू। मै नही समझ पाता कि आपके ऋण से मै किस प्रकार मुक्त हो सकूगा।

महाराज – आयुष्मन्! आप ऐसी विनम्र बात क्यो नही कहेगे, क्योकि आप एक महान् व्यक्ति के सुपुत्र हैं। किन्तु इस समय जयपुर के महाराज मुझसे युद्ध करने यहाँ आ चुके है। जब मैने उनके समक्ष सन्धि का प्रस्ताव रखा तो उन्होने मुझसे यही कहा कि यदि राजकुमारी तथा राजकुमार सुख-पूर्वक दिल्लीसम्राट् के पास पहुँच जॉय तो दिल्लीसम्राट् आपके साथ अवश्य ही सन्धि कर लेगे। सम्प्रति अपने शिविर मे जयपुर-नरेश आपकी प्रतीक्षा कर रहे है।

मुअज्जम—यदि आप की अनुमति हो तो मै अभी वहाँ के लिए प्रस्थान र दू। पिता जी को तो आपके साथ सन्धि करनी ही चाहिए। अन्यथा न उनका पुत्र हू और न वे मेरे पिता हे।

५

ततो महाराष्ट्रपतिस्त प्रतिपूज्य, सादर स्वकीयै सह विसृज्य, रसनारीसमीपे पुनरगच्छत्। रसनारी तु अनुभविष्यमाणेन शिवविरहेण ग्लाना, मुहुर्मुहुस्तातसेनाप्रेपणश्रवणेन कुपिता, माता-पितृस्नेह-स्मरणेन च विकला, प्रस्थातु नोमिति न वा नेति वक्तु पारितवती।

महाराष्ट्रेश्वरश्च ता चलप्रकृतिमगम्भीरस्वभावा चावगत्य, "भद्रे ! अल विपादै ! दिल्ली गन्वा पित्रोर्दुःख शमय मा स्नेहेन सनाथय-सीत्यपि कयाचन मुद्रया प्रकटय। तेनानुमन्यमाना च मामप्यनुगृहाण। अन्यथा तु युद्धे सवृत्ते त्वत्पितर जिघासति मयि श्व एव वा, परश्व एव वा तव स्नेह कार्श्यमासादयेत्। उत्तिष्ठ, वीरतनयाऽसि, राजकुमार्यसि, न शोभते त्वयि एतादृशश्चिन्ताविनान"—इति प्रावोधयत्।

---

अनुभविष्यमाणेन–कियत्कालानन्तरमेव भविष्यता। ग्लाना–क्षीणहर्षा। विकला–खिन्ना। पारितवती–अशकत्।

चलप्रकृतिम्–चञ्चलस्वभावाम्। शमय–शान्ति नय। सनाथयसि–कृनाथयसि। मुद्रया–भङ्ग्या। प्रकटय–विशकलय। अनुमन्यमाना–अनुमोद्यमाना। अनुगृहाण–अनुकम्पय। शिववीरस्य दिल्लीगमने कारणमिदमेवेति कथनभङ्ग्याऽन्यया विवेचयन्तु पण्डिता। जिघासति–हन्तुमिच्छति शत्रुन्तम्। कार्श्यम्–दौर्बल्यम्।

---

तदनन्तर महाराष्ट्रराज राजकुमार का सम्मान कर अपने सेवको के साथ उन्हे आदरपूर्वक जयपुराधीश के शिविर के लिए भेज कर स्वयम् पुन रोशनआरा के पास पहुँच गए। किन्तु शिवाजी के भावी विरह की चिन्ता से खिन्न, पिता जी के द्वारा महाराष्ट्रराज से युद्ध करने के लिए सेना भेजने की खबर बारम्बार सुन कर अत्यन्त कुपित और माता-पिता के स्नेह के स्मरण से विकल रोशनआरा तो दिल्ली जाने के विषय मे अपनी सम्मति या असमति प्रकाशित नही कर सकी।

महाराष्ट्रराज उसे चञ्चल प्रकृति तथा गम्भीरतारहित स्वभाव वाली समझ कर इस तरह उसे समझाने लगे—भद्रे ! विपाद करना निरर्थक है। अभी दिल्ली जाकर अपने माता-पिता के दुःख को दूर करो और उनके समक्ष किसी मुद्रा मे तुम मेरे प्रति अपने प्रेम को भी प्रकट करना।

सा च चलप्रकृतितया यथा बोधिता तथैव वर्द्धितोत्साहा मन्धि विहितमिव, पित्रनुमतिमासादितामिव, पाणिग्रहण-विधि प्रवध्यमान-मिव, आत्मान च महाराष्ट्रराजेन स्निह्यमानमिव मन्यमाना नपद्युत्थाय, सप्रेम समालिङ्ग्य, तन्निर्दिष्टशिविकामारुह्य, वह्वभि मखीभि परि-वृता, अनेकै सादिभि पादातिकैश्चानुगम्यमाना, श्रीजयसिहाध्युषित-शिविराभिमुख प्रतस्थे ।

अथ कालान्तरे महाराष्ट्रराजोऽपि अम्बराधीश्वरस्य निकटे गत । स चेनमवलोक्य, आलिङ्ग्य, अतिप्रेम्णाऽवादीत्—वीर ! कुमारौ दिल्ली प्रेषितवानस्मि । अनेनोपकारेणात्यन्त मोदिष्यते दिल्लीवल्लभ । गृह्य-

पित्रनुमतिम्—जनकानुज्ञाम्, आसादितामिव—लब्धामिव । पाणिग्रहण-विधिम्—विवाहविधानम्, प्रवध्यमानम्—समारभ्यमाणम् । वह्वभि —वह्वीभि । "वोतो गुणवचनात्" इत्यनेन स्त्रीप्रत्ययस्य वैकल्पिकत्वम् । पादातिकै —पद्गै सैनिकै ।

कुमारौ—रमनारीमायाजिह्मौ । एकशेष , कुमारी च कुमारश्चेति ।

यदि तुम्हारे पिताजी की अनुमति हो जाय तो मुझे भी पीछे अनुगृहीत करना। यदि सन्धि नही हुई तब तो युद्ध छिड जाने पर तुम्हारे पिता की हत्या की इच्छा रखने वाले मेरे प्रति कल या परसो ही तुम्हारा स्नेह शिथिल हो जाएगा । उठो, तुम एक वीर की सुपुत्री हो, राजकुमारी हो, इस प्रकार का चिन्ता-प्रवाह तुम्हे शोभा नही देता ।

प्रकृति-चञ्चल होने के कारण राजकुमारी शिवाजी के समझाने के अनुसार ही उत्साहित होकर अपने पिता के साथ शिवाजी की सन्धि को सम्पन्न-सी, शिवाजी से प्रेम करने के लिए अपने पिता की अनुमति को सम्प्राप्त-सी, शिवाजी के साथ अपनी शादी को सम्पन्न-सी और अपने को महाराष्ट्रराज का स्नेह-भाजन-सी मानती हुई शीघ्र ही उठकर, प्रेमपूर्वक शिवाजी का आलिङ्गन कर, शिवाजी द्वारा निर्दिष्ट पालकी मे बैठ कर, बहुत सहेलियो से परिवृत होकर, अनेक घुडसवारो तथा पैदल अनुचरो के साथ श्रीमान् जयसिंह के शिविर की ओर चल पडी ।

तामिदं सन्धिपत्रम्, यानि दुर्गाणि भवता दिल्लीश्वरेण सह युद्ध्वा बलाद् गृहीतानि, तानि निवर्तनीयानि, यथोल्लेखञ्च किञ्चन प्रतिवर्षं देयम् ।

महाराष्ट्रमुकुटस्तु ओमित्युक्त्वा, सन्धिपत्रं गृहीत्वा, किञ्चित् मलिनमुख इव संवृत्तः ।

जयपुरेश्वरस्तु—वीर ! वर्द्धस्व, अलं शोकेन । समय एष ईदृश एव, साम्प्रतमुत्तिष्ठ, महाराजसाहाय्यं युद्धेषु विधेहि । विजयपुरेश्वर एष दिल्लीश्वरस्याऽऽज्ञां न पालयति–इत्येतेन सह बहूनि समराणि भूतानि, भवन्ति च । तदत्र कौशलं दर्शयित्वा दिल्लीश्वरस्य दक्षिणो बाहुः भवतस्व—इत्युवाच ।

---

मलिनमुखः–धूमिलाननः ।

समराणि–युद्धानि । "अस्त्रियां समरानीकरणाः" इत्यमरः । भूतानि–जातानि । कौशलम्–नैपुणीम् । दक्षिणो बाहुः–वामेतरो भुजः । परमस्नेहभाजनमिति यावत् ।

---

तत्पश्चात् कालान्तर मे महाराष्ट्रराज भी जयपुराधीश्वर के शिविर मे पहुँचे । शिवाजी को देखते ही जयपुराधीश ने आलिङ्गन कर अत्यन्त प्रेम से कहा—वीर ! राजकुमारी तथा राजकुमार को मैने दिल्ली भेज दिया है । अब आप यह सन्धि-पत्र लेले और आपने दिल्ली-सम्राट् के साथ युद्ध कर जिन दुर्गो को बल से आत्मसात् कर लिया है उन्हे लौटा दे और प्रतिवर्ष सन्धि-पत्र के उल्लेख के अनुसार कर के रूप मे दिल्लीश्वर को कुछ दिया करे ।

स्वीकारात्मक शब्दोच्चारणपूर्वक सन्धि-पत्र के परिग्रहण से महाराष्ट्रदेशमुकुट शिवाजी का मुख कुछ मलिन हो गया ।

तदनन्तर जयपुरेश्वर ने शिवाजी से कहा—वीर ! आपकी समृद्धि हो । शोक करना व्यर्थ है ! यह समय ऐसा ही है, सम्प्रति आप उठे और युद्ध मे दिल्ली-सम्राट् की सहायता करे । विजयपुर के महाराज दिल्लीश्वर की आज्ञा का पालन नही करते—इसलिये उनके साथ कई बार सम्राट् के युद्ध हो चुके है और हो भी रहे है । अतः विजयपुराधीश के साथ होने वाले युद्ध मे अपनी युद्ध-कुशलता का प्रदर्शन कर आप दिल्ली–सम्राट् का दायाँ हाथ बन जायँ ।

महाराष्ट्रराजस्तु अनयाऽपि मुद्रया चिरन्तनमपत्नस्य विजयपुरेश्वरस्य दमनाऽऽदेशश्रवणेन स्फुरितवाहु सेना आयोजयितु तत्क्षणाददिदेश।

आसीदासन्नमेव विजयपुराधीशस्य गिरिशिखरस्थमेक रुद्रमण्डलाभिध महद् दुर्गम्। तदेव हस्तगत विधातु कौशलमाचचार शिवराज। एकान्ते गौरसिहमाकार्य, रात्रौ रुद्रमण्डलस्य पूर्वत सेना आयोज्य, प्रस्थातु परभटेषु सम्मुखमायातेषु च, पृष्ठत शनै शनैरपसरणच्छलेन तान् पुरतो नेतुमादिशत। स्वयञ्च महान्धतमसे, अन्यजीव-माल्यश्रीकस्तान्यजीव-रघुवीरादि-सहित सहस्र वीरान् सह नीत्वा रुद्रमण्डलस्य पृष्ठतो निभृत प्रचलित।

---

अनयाऽपि मुद्रया–अनेनापि प्रकारेण। चिरन्तन-सपत्नस्य–पुरातनशत्रो। दमनादेशश्रवणेन–निग्रहाज्ञाश्रुत्या। स्फुरितवाहु–चपलितभुज। आयोजयितुम्–सन्नाहयितुम्।

आसन्नम्–समीपवर्त्ति। गिरिशिखरस्थम्–पर्वतकोटिस्थम्। हस्तगतम्–स्वायत्तम्। कौशलम्–नैपुण्यम्। आयोज्य–सघट्य। परभटेषु–शत्रुसैनिकेषु। अपसरणच्छलेन–पलायनव्याजेन। नेतुम्–प्रापयितुम्। महान्धतमसे–गाढेऽन्धकारे। निभृतम्–गूढम्।

---

इस वहाने भी अपने चिरन्तन शत्रु विजयपुरेश्वर के दमन का आदेश सुनकर स्फुरित वाहुवाले महाराष्ट्रराज ने उसी क्षण सेना के आयोजन के लिये आदेश दे दिया।

पास मे ही विजयपुरेश्वर का एक पर्वतशिखरवर्त्ती ( =पर्वतीय प्रदेश मे स्थित ) रुद्र-मण्डल नाम का दुर्ग था। प्रथमत शिवाजी ने उसी को जीत लेने की चातुरी की। एकान्त मे गौरसिह को वुलाकर रात मे ही रुद्रमण्डल की पूरव दिशा मे अपनी सेना का आयोजन कर प्रस्थान करने के लिये और शत्रु-पक्ष के योद्धाओ के सामने आ जाने पर पीछे से धीरे-धीरे भागने के वहाने उन्हे ( =शत्रुपक्षीय योद्धाओ को ) आगे कर लेने, अर्थात् पीछे मे घेर लेने के लिये आदेश दे दिया और घने अन्धकार मे अन्यजीव, माल्यश्रीक,

महानेष उच्चो गिरि, अन्धतमस व्याप्तम्, अविदितचर पन्था। तथाऽपि क्वचिदुत्प्लुत्य, क्वचिच्छाखा आलम्ब्य, क्वचिदुपविश्य, क्वचिन्निर्झरजलान्त प्रविश्य, क्वचिन्लता-जालान्यपसार्य, क्वचिद्विद्धान् कण्टकानपनीय, कथ कथमपि दुर्गम्य नेदीयस्यामधित्यकायामायात। तावदपश्यद्-यद् दुर्गप्राचीर एका सदीपा काच-मञ्जूपा, अपराऽपराऽपि च स्थापितेति। ततो 'वयमाशङ्किता' इति निश्चित्य सर्वे तरुच्छायासु विलीना। मुहूर्तानन्तर पुनस्तूष्णीमुपगच्छन्तो ददृशुयत् पञ्चषा यवन-वीरा प्राचीरे पर्य्यटन्त सतर्कमधो वीक्षन्ते–इति। पुनस्तेषु तरूणामधो विलीनेषु, अन्धतमस-वशादनीक्षमाणा मर्मरकारणमलभमाना दौर्गिका पुनर्निवृत्ता। तत किञ्चिज्जाते पादाघातशब्दे, अकस्माद् दुर्ग-प्राचीर-स्योपरि एक, द्वौ, दश, शत, बहवश्च सशस्त्रा पुरुषा दृष्टा। तेऽपि नेदिष्ठान् दृष्टवन्त —इति वृक्षतलेषु लीयमानानपि प्रत्यर्थिन शक्तिशराघातैस्ताडयितुमारेभिरे।

---

उच्च –उन्नत। अविदितचर –पूर्वमविज्ञात। लताजालानि–व्रततिव्रातान्। विद्धान–चरणादिषु प्रविष्टान्। अपनीय–अपसार्य। नेदीयस्याम्–अन्तिकस्थायाम्। काचमञ्जूषा–रक्तवर्त्तिका। आशङ्किता –आशङ्काविषयीकृता, दौर्गिकैरिति शेष। विलीना –क्षण्विता। प्राचीरे–प्राकारे। सतर्कम्–सावधानम्। मर्मरकारणम्–पत्रध्वनिहेतुम्। दौर्गिका –दुर्गरक्षापरायणा। सशस्त्रा –सायुधा। नेदिष्ठान–अतिशयान्तिकस्थान्। प्रत्यर्थिन –शत्रून्।

---

स्तन्यजीव तथा रघुवीरसिंह आदि के साथ एक हजार वीरो को साथ लेकर स्वयम् भी शिवाजी रुद्रमण्डल के पीछे से छिपकर चल पडे।

यद्यपि वह पर्वत बहुत ही ऊँचा था, घना अन्धकार छाया हुआ था, रास्ता भी पूर्व-परिचित नही था, तथापि कही कूद कर, कही वृक्ष की शाखा के सहारे, कही बैठकर, कही झरने के प्रवाह के माध्यम से, कही लताओ के जाल को विध्वस्त कर और कही घने काटो को हटा कर किसी किसी प्रकार उस दुर्ग के समीप की अधित्यका (पहाड के ऊपर की समतल भूमि) पर शिवाजी पहुँचे। तब तक उन्होने देखा कि दुर्ग के घेरे के ऊपर एक दीपक सहित शीशे की पेटी और उसके बाद अन्यान्य पेटियाँ भी पडी थी। तदनन्तर

तत पुर समागत्य, प्रत्यक्ष योद्धुमारब्धवता शिववीरेण निर्दिष्टा, 'दृष्टा वयमिति कि व्यर्थाघातसहनैरात्माच्छादनैश्च'—इति स्वय बोबुध्यमाना सक्ष्वेड सर्वे शिवसहचरा —"हर हर महादव" इत्युदीर्य, प्रत्यक्षीभूय च शाखि-शाखान्तरोदर-सुप्त-पक्षि-पटलान्युन्निद्रयन्त, चन्द्र-चन्द्रिका-साक्षिक घोर युद्ध विधातुमुपक्रान्तवन्त। यवन-शर-

---

व्यर्थाघातसहनै –निष्प्रयोजननाशमर्पणै। आत्माच्छादनै –स्वगोपनै। बोबुध्यमाना –अतितरा जानन्त। प्रत्यक्षीभूय–साक्षादेव पुरत आगत्य। शाखिशाखान्तरोदरसुप्तपक्षिपटलानि – द्रुमावयवमध्यगृहीतनिद्रविहगसमूहान्। उन्निद्रयन्त –जागरयन्त। चन्द्रचन्द्रिकासाक्षिकम्–हिमदीधिति-

---

"हम लोगो के यहाँ आजाने की आशङ्का दुगरक्षको को हो चुकी है" यह निश्चय कर, सब वृक्षो की छाया मे छिप गए। थोडी देर बाद जब ये पुन चुप-चाप आगे बढने लगे तो उन सबो ने देखा कि पाँच-छह यवन वीर घेरे के ऊपर घूमते हुए अवधानपूर्वक देख रहे थे। इसलिए जब पुन ये सब वृक्ष-छाया मे छिप गये तो घने अन्धकार मे इन सबको न देखते हुए, मर्मर शब्द के कारण के परिज्ञान के विना ही सब दुर्गरक्षक पुन लौट गये। तत्पश्चात् पुन पैरो के आघात का शब्द होने पर अकस्मात् दुर्ग के घेरे के ऊपर एक, दो, तीन, दस, सौ, हजार मराठा घोडे दीख पडे। उन दुर्ग-रक्षको ने भी नजदीक होने के कारण इन सबको देख लिया। अत वृक्ष के नीचे छिपे होने पर भी दुगरक्षको ने इन शत्रुओ के ऊपर शक्तियो और बाणो से प्रहार करना प्रारम्भ कर दिया।

तदनन्तर आगे बढकर आमने-सामने युद्ध छेड देने वाले शिवाजी ने अपने अनुयायियो से कहा—"जब हम लोगो को इन सबो ने देख ही लिया तो अब इनके प्रहार को सहना और अपने को छिपाये रखना व्यर्थ है।" शिवाजी की उपर्युक्त वाणी सुनकर स्वयम् ही युद्धविद्या के मर्मज्ञ उनके सहचर भी लल-कारते हुये "हर हर महादेव" शब्द का उच्चारण कर, समक्ष होकर वृक्ष की शाखाओ पर सोये पक्षि-समूह को जगाते हुए, चन्द्र की चन्द्रिका के साक्षित्व मे घोर युद्ध करने लग गये। यवनो के बाणो तथा रीछो से आहत महाराष्ट्र

भल्लाहता वहवो महाराष्ट्रवीरा चन्द्र-मरीचि-चाकचक्य-चमत्कृताम-धित्यका कोष्ण-रुधिर-पातै स्नपयन्त, शिवविजय-कुङ्कुमेनेव चर्चयन्त, ससूर्यभेद स्वर्ग प्रतिष्ठमाना शिव प्रणमन्त इव च पेतु । महाराष्ट्र-शरासन-मुक्तै शिलीमुखैराहता यवनवीरा अपि च वहुश प्राचीरमुभयत पेतु ।

अथ यावन्महाराष्ट्राधीशश्चिन्तयति यत्—"किमेतेनेदशेन क्रीडनकेनेव युद्धेन ? मध्ये मध्ये विहता वीरा उभयत पतन्ति। अस्माक चञ्चुप्रवेशश्च दुर्गेऽस्मिन्न भवति। होराद्वयानन्तर मार्तण्ड-मण्डलमुदेष्यति। ततस्तु कथमपि न पारयिष्यामोऽधिकवलानेतान् विजेतुम्, तत् सपदि केनापि कौशलेन प्राचीरमारुह्य दुर्गस्यान्त प्रवेष्टव्यम्"—इति। तावद् दृष्टवान् यदेको नववयस्को महाराष्ट्र-वीरो घोर युद्धम-

---

किरण-प्रत्यक्षदशकम्। चन्द्रस्य मरीचीनाम्—किरणाना चाकचक्येन चमत्कृताम्। कोष्णरुधिरपातै—मदुष्णरक्तपतनै। शिवविजयस्य कुङ्कुमेन—केसरेण। चर्चयन्त—लिम्पन्त। ससूर्यभेदम्—तिग्मदीधितिमण्डलभेदनपुरस्सरम्। महाराष्ट्राणाम् शरासनेभ्य—धनुर्भ्य, मुक्तै—नि सृतै, शिलीमुखै—वाणै। प्राचीरमुभयत, तसिलान्तयोगे द्वितीया—"ततोऽन्यत्रापि दृश्यते" इति।

क्रीडनकेनेव—खेलनेनेव। चञ्चुप्रवेश—लघुरपि प्रवेश। होराद्वयानन्तरम्—'घण्टा"—द्वयस्य पश्चात्। नववयस्क—नूतनावस्थाक, तरुण।

---

देश के वहुत से वीर चन्द्रमा की चन्द्रिका की चमक से चमत्कृत पवत की अधित्यका को अपने उष्ण रक्त के प्रवाह से स्नान कराते हुये, शिवाजी की विजय-क्रीडा के कुङ्कुम से अपने शरीर को लेपते हुये, स्वर्गारोहण क लिए सूर्यमण्डल का भी भेदन करते हुये और शिवाजी को प्रणाम करते हुए से धराशायी हो गये। मराठो के धनुप-मुक्त वाणो के आघात से वहुत से यवन-वीर भी घेरे के दोनो ओर गिर गये।

तत्पश्चात "इस तरह के क्रीडायुद्ध से कोई लाभ नही, क्योंकि इसके कारण ही वीच-वीच मे वहुत से वीर भी मारे जा रहे हैं, फिर भी हम लोगो का प्रवेश भी उस दुर्ग मे नही हो पा रहा है। दो घण्टे के वाद सूर्योदय भी

गणयन्, उपर्य्यध कतिपयान् शिला-खण्डान् चित्वा, भित्तिकार्पित-भल्लसमाश्रयो लाघवेनोत्प्लुत्य, प्राचीरमारुह्य, "विजयते महाराष्ट्रराज "–इत्युच्चैरवदत् ।

त च तथाऽऽरूढमालोक्य यवना सदन्तघर्षं सन्दष्टदशनच्छद निस्त्रिंशान् कोशादाकर्षन्त, शक्तिमुत्तोलयन्त, शरासनानि टट्कुर्वन्तश्च परित समापतिता । ताश्च भूमिष्ठा अपि महाराष्ट्रवीरा शरघातैरविध्यन्, प्राचीरारूढमात्मसहचर च समरक्षन् । तदालोक्य गौरव-गरिष्ठोऽपि लाघवेनोत्पत्य, सहचरैरप्यवितर्कितोत्पतनो वीरशिव स्वयमपि प्राचीरमारुह्य, परित समापतितान्प्रत्यर्थिन कदर्थीकृत्योभयत समपातयत् ।

---

चित्वा–सकलय्य । भित्तिकार्पित–कुड्यसस्थापित, भल्ल–कुन्त, समाश्रय–आधारो यस्य स ।

सदन्तघर्षम्–सदशनघट्टनम् । सन्दष्टदशनच्छदम्–आष्ठखण्डनपुरस्सरम् । निस्त्रिंशान्–असीन् । टङ्कुर्वन्त–टङ्कारशब्दभरितान् कुर्वन्त । भूमिष्ठा–भूतले तिष्ठन्त । अविध्यन्–अताडयन् । आत्मसहचरम्–निजसहगामिनम् । गौरवे॰ गरिष्ठ–अतिशयगुरु । लाघवेन–लघुशरीरतया । अवितर्कितोत्पतन–असभावितोर्ध्वगमन । कदर्थीकृत्य–विनाश्य । समपातयत्–समपोथयत् ।

ततः सक्ष्वेडम्—"आरुह्यतामारुह्यताम्"—इत्युक्त्वा धाविता महाराष्ट्राध्यक्षोत्साहिता बहवो महाराष्ट्रवीराः सोत्फालं प्राचीरमारोहन्, हस्तावलम्बेन चान्यान् बहून् क्षणेनोदतूतुलन्। क्षणं तत्र घोरं युद्धमभूत्। तावदकस्माद् दृष्टम—यत् कश्चन "हर हर महादेव"—इति तारस्वरेणोच्चारयन्, खड्गं चालयन्, सोत्फालं दुर्गान्तः-पतितोऽस्ति। सोऽयं रघुवीरसिंहः, यः सर्वेभ्यः प्रथममेव प्राचीरमारूढः, प्रथममेव च दुर्गान्तः प्रविश्य साहसमप्यकार्षीत्। तेन सहैव वीरराज-शिवोऽपि शार्दूल इव जघन्य-वन्य-मण्डले समापप्तत। तन्निरीक्ष्य शतशो महाराष्ट्र-वीरास्तथैव सकूर्दनं दुर्गान्तः प्रविष्टाः। तत्र च मुहूर्त्तं तुमुलं युद्धमभूत।

---

सक्ष्वेडम्—सगर्जनम्। महाराष्ट्राध्यक्षेण—शिववीरेण, उत्साहिताः—वर्धितसाहसाः। सोत्फालम्—सकूर्दनम्। हस्तावलम्बेन—कराश्रयणेन। उदतूतुलन्—उन्नीतवन्तः। शार्दूलः—सिंहः, व्याघ्रो वा। जघन्यानाम्—क्षुद्राणाम्। वन्यानाम्—आरण्यकानां शृगालादीनाम्, मण्डले—समूहे। समापप्तत्—निपतितवान्। सकूर्दनम्—सोत्फालम्। तुमुलम्—भयानकम्।

---

सब तरफ से उस पर टूट पड़े। किन्तु जमीन पर खड़े होने पर भी अन्य महाराष्ट्रीय वीरों ने उन यवन सैनिकों को अपने शराघात से वेध दिया और प्राचीर पर आरूढ अपने साथी को बचा लिया। उस घटना को देख कर गौरव से गरिष्ठ होने पर भी वीर शिवाजी शरीर-लाघव के कारण इस प्रकार उछल पड़े जिस प्रकार उनके उछलने की सम्भावना उनके सहचरों के मन में भी न थी और प्राचीर पर चढ कर उन्होंने चारों तरफ से टूट पड़ने वाले शत्रुओं को मार कर प्राचीर के दोनों किनारे गिरा दिया।

तत्पश्चात्—चढिये चढिये—यह गर्जन-पूर्वक कह कर, आगे दौड़ने वाले बहुत से महाराष्ट्रीय वीर महाराष्ट्रराज द्वारा उत्साहित होकर, उछल कर प्राचीर पर चढ गये और अपने हाथों के सहारे नीचे खड़े बहुत से अपने सहचर वीरों को भी ऊपर तौल लिया। थोड़ी देर तक घमासान लड़ाई हुई। तदनन्तर एकाएक उन सबों ने देखा कि उच्च स्वर से "हर हर महादेव।" की ध्वनि करता हुआ एक वीर अपना खड्ग चमकाते हुए दुर्ग के अन्दर कूद

दण्डद्वयेनैव शतशो यवना हता, अपरे च जीवन्त एव निगृहीता, शान्तमिव च युद्धम्। ततो महाराष्ट्र-वीरा स्थूल-दीपान् प्रज्वल्य, दुर्ग-मध्यस्थ-प्रासादाभिमुख चलिता दृष्टवन्तश्च यत् दुर्गाध्यक्षो गृहान्त प्रविष्ट, द्वारश्च लौह-शृङ्खल-कीलैर्दृढतरै कपाटैरमुमुद्रदिति। निरीक्ष्यैतत् क्षण विचार्य महाराष्ट्रराज सगर्जनमुवाच—"दुर्गाध्यक्ष! स्वामिभक्ति दर्शितवानसि, यथाशक्ति दुर्ग रक्षितवानसि, व्यर्थोऽधुना लज्जया गृहप्रवेश, तत स्वय वहिर्निर्गच्छसि चेद जीवन्त त्यक्ष्याम, इतरथा तु प्रासादेन सह त्वा क्षणेन धक्ष्याम"—इति।

---

दण्डद्वयेन–घटिकाद्वयेन। निगृहीता–वशीकृता। स्थूलदीपान्–"मशाल" इति ख्यातान्। दुर्गमध्यस्थस्य–दुर्गान्तरालविद्यमानस्य, प्रासादस्य–हर्म्यस्य, अभिमुखम्–सम्मुखम्। लौहशृङ्खलकीलै–आयसनिगडकण्टकै। दृढतरै–कठोरतरै। कपाटै–अररै। अमुमुद्रत्–व्यधात्। सगर्जनम्–सक्ष्वेडम्। धक्ष्याम–ज्वालयिष्याम।

---

पडा। सबसे पहले ही प्राचीर पर चढने वाला और दुर्ग मे प्रवेश करने का भी सर्वप्रथम साहस करने वाला वह वीर था रघुवीर सिह। रघुवीर सिह के साथ ही महान् वीर शिवाजी भी क्षुद्र जङ्गली जीव-जन्तुओ की मण्डली मे सिह के समान उस दुर्ग मे कूद पडे। उन्हे देख कर उनके पीछे सैकडो महाराष्ट्रीय वीर उसी प्रकार कूद कर दुर्ग के भीतर घुस गए और वहाँ कुछ समय के लिए घनघोर युद्ध हुआ।

दो घण्टे मे ही सैकडो यवन सैनिक मार दिए गए। बहुत से तो जीते ही पकड लिए गए और युद्ध भी समाप्त-प्राय हो गया। तदनन्तर महाराष्ट्रीय वीर मशाल बाल कर दुर्ग के मध्य मे प्रतिष्ठित प्रासाद की ओर बढे और आगे बढने पर उन सब ने देखा कि दुर्गाध्यक्ष ने घर मे प्रविष्ट होकर लौह-निर्मित साँकल तथा अर्गला से युक्त होने के कारण अत्यन्त सुदृढ किवाडो से दरवाजे को भीतर से बन्द कर दिया। उस घटना को देखकर थोडी देर विचार-विमर्श करने के बाद महाराष्ट्रराज ने गरजते हुए कहा—दुर्गाध्यक्ष! तुम अपनी स्वामि-भक्ति का प्रदर्शन कर चुके हो एवम् अपनी शक्ति के अनुसार दुर्ग को भी बचाने का प्रयास तुमने किया है। सम्प्रति लज्जावश घर घुसना

दुर्गाध्यक्षो रहोमत्तखानम्नु क्रियानमभिहारेण शृण्वन्नपि न वहिर्निरगात् । अथ महाराष्ट्रराजस्याऽऽज्ञामवाप्य, तदीया वीरा इन्धनैरावृत्य प्रासादममु ज्वलयितुमारेभिरे। तत समन्ततो विहायस लिहन्तीषु देदीप्यमानामु शिखासु, 'अवीरयोग्य मृत्यु प्राप्तोऽहम्' इत्याशङ्क्य खड्गहस्तो गवाक्षिकात उत्प्लुत्य, भूमौ पतितो रहोमत्तखान उवाच-किमिति ममैकस्य प्राणार्थ महामूल्य महार्घ-महार्घ-वस्तुजात-पूरित महाप्रासाद दहथ ? एपोऽस्मि । यथेच्छ प्रहरत । स्वाम्यर्थेऽह प्राणानुत्सृजामि ।

---

रहोमत्तखान -"रहमत खा" इति लोके प्रसिद्ध । निरगात्-निष्क्रान्त । इन्धनै -काष्ठै , आवृत्य-आच्छाद्य । ज्वलयितुम्-दग्धुम् । आरेभिरे-आरब्धवन्त । विहायसम्-गगनम् । लिहन्तीषु-स्पृशन्तीषु । देदीप्यमानासु-अतितरा ज्वलन्तीषु । अवीरयोग्यम्-शूरानुपयुक्तम् । गवाक्षिकात -वातायनिकात । उत्प्लुत्य-सङ्कूर्द्य ।

दहथ-ज्वालयथ । यथेच्छम्-यथाभिलापम् । प्रहरत-मारयत । उत्सृजामि-त्यजामि । "वर्तमानसामीप्ये वर्त्तमानवद्वा" इति लट् ।

---

निरथक है। अत यदि तुम स्वयम् बाहर निकल आते हो तब तो हम लोग तुम्हे जीते ही छोड देंगे, अन्यथा प्रासाद के साथ-साथ तुम्हे भी जला कर भस्मसात् कर देंगे ।

किन्तु बारम्बार शिवाजी के वचन को सुनकर भी दुर्गाध्यक्ष रहमत खाँ बाहर नही निकला । उसके बाद महाराष्ट्रराज की आज्ञा पाकर उनके सहचर वीर उस प्रासाद की सभी दिशाओ मे लकडी इकट्ठे कर उसे ( प्रासाद को ) जलाने लग गए । तत्पश्चात् सब तरफ से अग्नि की देदीप्यमान ज्वाला जब आकाश को चूमने लग गई तब 'मुझे तो कायर की तरह मरना पड रहा है' इस आशङ्का से रहमत खाँ हाथ मे खड्ग लिए खिडकी के सहारे से बाहर उछल कर जमीन पर गिर गया और कह उठा । केवल मेरे प्राण के सहार के लिए तुम लोग बहुमूल्य पदार्थो से परिपूर्ण इस महान् प्रासाद को क्यो जला रहे हो ? ये लो मै आ गया । अपनी इच्छा के अनुसार तुम लोग मुझे मार डालो । मैं अपने स्वामी के लिए अपने प्राण छोड रहा हूँ ।

तदाकलय्य परित परिपतितेपु महाराष्ट्रवीरेपु, महाराष्ट्र-पति-रगादीत्—"वीरोऽसो, वीरोऽसा, न हन्तव्य , न हन्तव्य । किन्तु जीवन्नेव ग्रहीतव्य "—इति ।

तत एकाकिन्यपि सुसज्ज-निस्त्रिशाना महाराष्ट्र-वीराणा मण्डले, सखङ्गचालन दक्षान् वामाश्च मार्गाश्चरति तस्मिन् यवनवीरे, अकस्माद् विद्युच्चमत्कार इव सोत्फालमापत्य रघुवीर सत्सरु तस्य मुष्टि जग्राह । यावच्चैपको यतत आच्छेत्तु स्वहस्तम्, तावद् वीरा दृढ गृहीत्वा, तत्कराच्चन्द्रहासमाच्छिद्य, उष्णीपिकापटेन वाह्वो स्कन्धे च समबध्नन् । महाराजाऽऽज्ञया च अनेक-शत-निगृहीत-जनाधिष्ठिते कोण-गृहे तमपि निक्षिप्य, कवाटे सममुमुद्रन् ।

---

एकाकिनि—असहाये । सुसज्जनिस्त्रिशानाम्—मन्नद्धासीनाम् । सखड्ग-चालनम्—सचन्द्रहासस्पन्दनम् । 'विद्युच्चपला चञ्चला अपि' इत्यमर । विद्युच्च-मत्कार इव—चपलाचमत्कृतिरिव । सत्सरुम्—सखड्गमुष्टिम् । एप एव एपक । "अव्ययसर्वनाम्नामकच्प्राक् टे" । आच्छेत्तुम्—आक्रष्टुम् । यतते—उद्युङ्क्ते—उष्णीषिकापटेन—शिरोवेष्टनवाससा । अनेकशतनिगृहीतजनाधिष्ठिते—अत्यधिकचारकीकृतमानवविराजिते । निक्षिप्य—वलात्प्रवेश्य । कवाटे—"कवाटमरर तुल्ये" इत्यमर । सममुमुद्रन्—अप्यधु ।

---

रहमत खाँ की बात सुनकर जब महाराष्ट्र के वीर सब तरफ से उस पर टूट पडे तब महाराष्ट्रराज ने कहा—"यह एक वीर है, वीर है, इसे मारो नही, किन्तु जीते ही इसे पकड लेना है ।"

तत्पश्चात् सुसज्जित खड्गो वाले महाराष्ट्रीय वीरो की मण्डली मे अकेला होकर भी तलवार चमका कर दायी-बायी ओर परिभ्रमण करने वाले उस यवन वीर की खड्गयुक्त मूठ को रघुवीर सिंह ने बिजली की चमक की तरह कूद कर पकड लिया । उस पर रहमत खाँ अपने हाथ को खीच लेना चाहता ही था कि अन्य महाराष्ट्रीय वीरो ने उसे कस कर पकड लिया और उसके हाथ से खड्ग छीन कर पगडी से उसके हाथ तथा कन्धे को बाँध पुन महाराज की आज्ञा से सैकडो कैदियो से भरे कोण-गृह मे रहमत खाँ को भी ढकेल कर उन वीरो ने किवाडियाँ बन्द कर दी ।

तत प्रासाद-दाह शमयित्वा, कथ कथमप्यन्त प्रविश्य, अट्टालिकामारुह्य, महाराष्ट्रराजो दृष्टवान्-यत् पूर्वत सञ्जात एवारुणोदय । तत्प्रभया किञ्चित् किञ्चिद् भासमाने भूभागे सुदूरमवलोकितवान्-यत् परिपन्थि-पदातिना षट् सप्त वा शतानि स्वाभिमुखमेव धावमानानि समायान्तीति । अतर्कयच्च यदवश्यमेते गौरसिंह-सेना-कोलाहलाऽऽकृष्टा सुदूर पूर्वतो गता आसन् । तत एव च प्रासाद-दाह-ज्वाला-माला अवलोक्येतो निवृत्ता कोप-कषायिता समायान्ति, तत् सपद्येवैतै सह युद्धस्य कश्चन सकौशल प्रबन्धो विधेय , अन्यथा तु नि शेषमेवैतेऽस्मान् समुच्छेत्स्यन्ति ।

अथ महाराष्ट्रराज क्षण स्वमित्रै सह सम्मन्त्र्य, दुर्ग-युद्धार्थमेवावातिष्ठत । क्षण विमृश्य च, स्वप्रधानवीरानाहूय पुनरुवाच-"मित्राणि !

---

अरुणोदय –भास्करोद्भूतिपूर्वकालिकलौहित्याविर्भाव । भासमाने–द्योतमाने । परिपन्थिपदातिनाम्–शत्रुपदगानाम् । धावमानानि–त्वरया चलन्ति । गौरसिंहस्य सेनाया कोलाहलेन–कलकलेन, आकृष्टा –आहूता । प्रासाददाहेन–हर्म्यज्वलनेन, ज्वालामाला –अग्निशिखा । कोपकषायिता – क्रोधकलुषिता । सकौशलम्–सनैपुण्यम् । नि शेषम्–साकल्येन । समुच्छेत्स्यन्ति–समुन्मूलयिष्यन्ति ।

---

उसके बाद प्रासाद की आग बुझाकर, किसी प्रकार प्रासाद के भीतर घुस कर, अट्टालिका पर चढ कर, महाराष्ट्रराज ने देखा कि पूव दिशा मे अरुणोदय हो चुका था । अरुण की लालिमा से अल्प-प्रकाशित भूभाग मे बहुत दूर उन्होने देखा कि शत्रुपक्ष के करीब-करीब छह सात सौ सैनिक उनकी ओर ही दौडे आ रहे थे । उन शत्रु सैनिको को सम्मुख आते देख कर महाराष्ट्रराज ने सोचा कि गौरसिंह के सैनिको के कोलाहल से आकृष्ट होकर ही वे सैनिक सुदूर-पूर्व चले गये थे । किन्तु वही से यहाँ प्रासाद मे लगी अग्नि की ज्वालाओ को देख कर वे लौट गये हैं और कोपारुण नेत्र होकर इधर ही आ रहे हैं । अत शीघ्र ही इनके साथ युद्ध करने का कोई चतुरतापूर्ण उपाय रचना चाहिए, नही तो ये हम लोगो को सर्वथा विनष्ट कर डालेंगे ।

यद्यप्यायस्तमस्मन्मण्डलम्, सव्रणा बहव पदातय, साम्मुख्य द्विगुणै परिपन्थिभि, तथाऽपि सकाशमागच्छन्ती शत्रु-सेनामालोकयतोऽपि तूष्णीं स्थातु नोत्सहते मे चेत । सदैव प्रसह्याऽऽक्रम्य युद्धवानस्मीति गृहे आत्मानमाच्छाद्य वर्त्तितु नोररीकरोत्युर । अप्यस्ति कश्चिद्वीर य शतद्वय भटा सह नीत्वा, अग्रत एव गत्वा, शस्त्रक्रीडया वराकैरेतै सपत्नै क्रीडेत् ? विश्वसिमि एतेषा पृष्ठलग्न एव गौरसिंहोऽपि ससेन आयातीति । यावदितोऽस्मत्सेना होरार्द्धमिव समर-दुरोदरेण यापयिष्यति तावद् गौरोऽपि तत आगत्य कृपाण-धाराभिरेतान

समन्त्र्य-विचार्य । आयस्तम्-श्रान्तम्, अस्मन्मण्डलम्-अस्मत्सैन्यम् । सव्रणा -साघाता । साम्मुख्यम्-आभिमुख्यम् । "सामना" इति हिन्दी । सकाशम्-समीपम् । प्रसह्य-बलात् । गृहे-दुर्गे । वर्त्तितुम्-स्थातुम् । नोररीकरोति-न स्वीकरोति । उर -हृदयम् । वराकै -क्षुद्रै । सपत्नै -शत्रुभि । पृष्ठलग्न -पश्चात्पद । होरार्द्धम्-घण्टार्द्धम् । समर एव दुरोदरम्-द्यूतम्,तेन । कृपाणधाराभि -चन्द्रहासप्रवाहे, स्नपयिष्यति-स्नान कारयिष्यति । मारयिष्यतीति यावत् । शस्त्रीणा पातै -मारणै, सत्कर्तुम्-आदर्तुम् । हन्तुमिति यावत् ।

तत्पश्चात् क्षण भर महाराष्ट्रराज अपने मित्रो के साथ मन्त्रणा कर दुर्ग मे ही युद्ध करने को तैयार हो गए। थोडी देर विचार करने के बाद अपने प्रधान वीरो को बुलाकर शिवाजी ने उनसे पुन कहा—मित्रो ! यद्यपि हमारी सैनिक मण्डली थक चुकी है, बहुत से पैदल सैनिक घायल हो चुके है और सामना भी शत्रु की दूनी सेना से करना है तथापि समीप आती हुई शत्रु-सेना को देख कर मेरा मन शान्त रह जाने के लिये उद्यत नही हो पाता। यत सर्वदा बलपूर्वक आक्रमण कर मैने युद्ध किया है, अत आज अपने को घर मे छिपा कर बैठ जाने के लिए मेरा हृदय स्वीकार नही कर रहा है। क्या हम लोगो मे कोई ऐसा वीर है जो अभी दो सौ सैनिको को साथ लेकर आगे जाकर इन क्षुद्र शत्रुओ के साथ शस्त्रक्रीडा कर सके ? मुझे तो ऐसा विश्वास है कि इन सब के पीछे ही अपनी सेना के साथ गौरसिंह भी आता ही होगा, अत जब तक हमारी सेना युद्धात्मक द्यूत-क्रीडा मे आधा घण्टा बिताएगी तब तक गौरसिंह भी पीछे से आकर ससैनिक अपने कृपाणो के

स्नपयिष्यति—इति। कथ्यताम्, क ममुत्सहते द्वे शते वीराणा सह नीत्वाऽग्रत एव सपत्नान् शक्ति-पातै मत्कर्तुम् ?"—इति।

तदाकर्ण्य "सज्जा वय शिरमा वोढुमादेशम्"—इति सर्वे प्रोचु। तत परितो विलोकयन् महाराष्ट्रराजो रघुवीरसिंहमपि बद्धाञ्जलिं सम्मुखस्थमालोक्य व्याजहार—"रघुवीर! अद्य त्वमेव युद्धमारब्धवानसि, त्वमेव च मध्येऽपि पराक्रम दर्शितवानसि, त्वमेव चाधुना युद्ध समापय, पूर्ण-पारितोषिक-भाक् च भव"।

तदवधार्य प्रणम्य 'ओम्' इत्युक्त्वा रघुवीर शतद्वय साहसिकान् पत्तीन् सह नीत्वा समापत्य, उच्छलितकोपैर्यवनवीरै सह युद्धमन्वतिष्ठत्। सपत्नापेक्षया त्रिगुणितेष्वपि, विस्मितप्रायेषु च तेषु ससिंहनाद प्रासासि-रिष्टि-तोमर-क्षेप-तत्परेषु, अकस्मात् पृष्ठतो "हर हर महादेव!"—इति व्याहरन्ती गौरसिंह-सेनाऽपि समापप्त। तत क्षणे-

सज्जा—सन्नद्धा। पूर्णस्य—समग्रस्य, पारितोषिकस्य—कृते कार्ये प्रसन्नतया "इनाम" इति ख्यातस्य, भाक्—ग्रहीता।

पत्तीन्—पदातिसैनिकान्। उच्छलितकोपै—विवृद्धक्रोधै। प्रासासिरिष्टितोमराणा क्षेपे—पातने, तत्परेषु—निरतेषु। व्याहरन्ती—कथयन्ती।

---

प्रवाह से इन दुष्टो को स्नान करा देगा। अब कहिए—दो सो वीरो को साथ लेकर दूरस्थ ही शत्रु-सैनिको का शक्ति-प्रहार से सत्कार करने के लिए कौन सा वीर उत्साहित है ?

महाराष्ट्रराज की वाणी सुनकर सब कह उठे—हम लोग श्रीमान् के आदेश को शिरोवहन के लिए तैयार है। उसके बाद चारो तरफ देखते हुए महाराष्ट्रराज ने अपने सम्मुख हाथ जोड कर खडे रघुवीर सिंह को देख कर कहा— रघुवीर! आज तुमने ही युद्ध का प्रारम्भ किया हे मध्य मे भी तुमने ही अपनी वीरता दिखलाई है और अब तुम्ही युद्ध का अन्त भी करो तथा पूर्ण परितोपिक के अधिकारी बनो।

शिवाजी की बात सुन कर उन्हे प्रणाम कर, 'जी हाँ, आज्ञा शिरोधार्य है'—ऐसा कह कर रघुवीरसिंह ने दो सौ साहसिक सैनिको को अपने साथ

नैव बहुषु विनष्टेषु परेषु निगृहीतेषु च शत्रु-वर्गेषु, जयध्वनिं प्रख्यापयन्त सर्वेऽपि समागत्य महाराष्ट्रराज प्रणम्य विजयदुर्ग-विजय-वैजयन्तीरुड्डाय्य भेरीराहत्य जयनादैर्गगन व्यलोडयन्।

तावत् अरुण-पीत-प्रकाशेन दरीदृश्यमानासु सकल भित्तिकासु, वनस्थलीषु, उपत्यकासु, अधित्यकासु, अट्टालिकासु च महाराष्ट्रराज ससाधुवादमखिलान् सम्मान्य, नित्य-क्रियाभिरात्मान सुखयितु विससर्ज, उक्तवाश्च गौरसिह यत् "स्वय गत्वा महाराजमम्बरेश्वर रुद्रमण्डल-विजय-वृत्तान्तमवगमय, ब्रूहि च यदपराह्णेऽद्य रुद्रमण्डल-प्रासादे

प्रख्यापयन्त–प्रकटयन्त। उड्डाय्य–उत्पात्य, "उड़ा कर" इति हिन्दी। व्यलोडयन्–ममन्थु, जयध्वनिभिरपूरयन्निति यावत्।

अरुणस्य–भुवनभास्करस्य, पीतेन प्रकाशेन। दरीदृश्यमानासु–अवलुलोक्यमानासु। अवगमय–बोधय। ब्रूहि–कथय। अपराह्णे–अह्नो द्वितीये

लेकर आगे बढ़कर अत्यन्त क्रुद्ध यवन सैनिकों के साथ युद्ध छेड दिया। शत्रु-पक्ष ( रघुवीर सिंह प्रभृति ) से त्रिगुण होने पर भी उसकी युद्ध-निपुणता से विस्मतप्राय होकर यवन-सैनिक सिंह की तरह गर्जन करते हुए रघुवीर सिंह के सैनिकों पर फरसा, तलवार, रीछ तथा तोमर से प्रहार करने मे लगे ही थे कि पीछे से "हर हर महादेव" इस शब्द का उच्चारण करती हुई गौरसिंह की सेना भी उन पर ( यवनों पर ) टूट पडी। तदनन्तर क्षण भर मे ही बहुत से शत्रुओं के मार दिए जाने और अवशिष्ट के कैद कर लिए जाने पर जयध्वनि करते हुए सभी महाराष्ट्रीय वीर महाराष्ट्रराज के पास आ गए और उन्हे प्रणाम कर विजयदुर्ग की विजय-पताका फहरा कर डका पीट कर जयध्वनि से आकाश को उन वीरो ने आन्दोलित कर दिया।

उस समय तक अरुण के पीत प्रकाश से दीवारो, वनस्थलियो, उपत्यकाओ, अधित्यकाओ और अट्टालिकाओ के पूर्णत दृष्टिगोचर हो जाने पर महाराष्ट्रराज ने धन्यवाद-प्रदान-पूर्वक अपने सभी वीरो को सम्मानित कर सबो को अपनी-अपनी नित्य क्रिया के सम्पादन द्वारा अपने अपने को प्रसन्न करने की आज्ञा दे दी और गौरसिंह से कहा—तुम स्वयम् वहाँ जाकर अम्बरदेशाधिपति महाराज जयसिंह को रुद्रमण्डल पर विजय प्राप्त करने की खबर दो और

साधुवाद-पारितोषिकादि-वितरणै प्रदर्शित-युद्ध-कौशल्यान् भटानधिक-मुत्साहयितु सभा भवित्री, तत्रोपस्थाय महाराजेन द्विगुण सनाथनीया समिति "—इति ।

तस्मिस्तथा प्रस्थिते दुर्ग-प्राचीन-द्वारादिस्थानेषु यथोचित विश्वस्त-चिरन्तन-स्वामिभक्त-भटानायोज्य, सभा-स्थान परिष्कर्तु काश्चिदा-दिश्य, स्वमनसि स्वास्थ्यमाससाद ।

अथ तथाऽनुष्ठितवत्स्वखिलेषु विहित-भोजनादि-क्रिये परत किञ्चिन्निद्रा-मुद्रयेव विद्रावित-मान्थर्ये जयपुराधीश्वरे, पश्चिमायामव-नमति मार्तण्ड-मण्डले, चण्ड-मरीचिप्रचयेपतप्रतप्त-वाताऽऽघात-प्रताप-

---

भागे । द्वादशवादनादूर्ध्वमिति यावत् । उत्साहयितुम्—ससाहसयितुम् । उप-स्थाय—समागत्य । सनाथनीया—कृतार्थनीया, समिति —सभा ।

विश्वस्तान्—जातविश्वासान्, चिरन्तनस्वामिभक्तान्—प्राचीनाधिपति-सेवकान् । आयोज्य—सलग्य्य । परिष्कर्तुम्—स्वच्छयितुम् । स्वास्थ्यम्—कृतकृत्यताऽऽनन्दम्, आससाद—प्राप ।

अनुष्ठितवत्सु—कृतवत्सु । निद्रामुद्रया—स्वापभङ्ग्या । विद्रावित-मान्थर्ये—दूरीकृतालस्ये । अवनमति—नम्रीभवति । चण्डमरीचीनाम्—भास्क-

---

उनसे निवेदन करना कि युद्ध मे कौशल दिखलाने वाले महाराष्ट्रीय वीरो को साधुवाद तथा परितोषिक आदि देकर अत्यधिक उत्साहित करने के लिए रुद्रमण्डल के प्रासाद मे ही आज दोपहर के समय एक सभा होने वाली है, उस अवसर पर वे वहाँ आकर इस सभा को द्विगुण कृतार्थ करे ।

महाराष्ट्रराज की आज्ञा से गौरसिंह के वहाँ से प्रस्थान कर देने के बाद दुर्गप्राचीर तथा प्रवेशद्वार आदि स्थानो पर विश्वासपात्र, चिर परिचित तथा स्वामिभक्त वीरो को नियुक्त कर स्वयम् सभाभवन की सफाई के लिए कुछ अनुचरो को आदेश देकर महाराष्ट्रराज ने निश्चिन्तता की साँस ली ।

तदनन्तर महाराष्ट्रराज के आदेश के अनुसार सभी आदिष्ट अनुचरो द्वारा अपने-अपने कृत्य के सम्पादित हो जाने पर, भोजनादि क्रिया सम्पन्न करने के बाद कुछ निद्रा के बहाने जयपुराधीश्वर द्वारा आगमन-श्रान्तिजन्य अपने

शुष्यत्फलपत्र-शाखाप्रशाखेषु वृक्ष-क्षुप-व्रतती-व्रजेषु, होराद्वयात् परत एव सम्पत्स्यमाने सायङ्काले रुद्रमण्डलस्थ-महाप्रासाद-सम्मुखे प्रवितततभूभागे सुवर्ण-सूत्र-प्रचय-रचित-लता - कुसुम - चित्र - विचित्रितस्य, विविध-वर्ण-वर्णनीय-स्तम्भ - शतोच्छ्रितस्य, पुष्कल - दाम-शताकृष्ट-बद्धस्य, कौशेयोल्लोचस्या-धस्ताद् आस्तीर्णेषु कौशेयाऽऽस्तरणेषु महासभा समतिष्ठत ।

तत्र हि कनकसूत्र-गुम्फित-प्रान्तासनाच्छादितायामेकस्या वित-

---

रदीधितीनाम्, प्रचयेन–समूहेन, ईषत्प्रतप्तस्य–उष्णप्रायस्य, वातस्य–वायो, आघातप्रतापेन–ताडनतेजसा, शुष्यन्त –शोषमुपगच्छन्त, फलपत्रशाखाप्रशाखा येषा तेषु । वृक्षा –अनोकहा, क्षुपा –ह्रस्वशाखा, व्रतत्य –लता, एतासा व्रजेषु–समूहेषु । सम्पत्स्यमाने–भाविनि । प्रवितते–अतिविस्तीर्णे, भूभागे–भूप्रदेशे । सुवर्णसूत्रप्रचयेन–हरण्यतन्तुसमूहेन, रचितै -निर्मितै, लताना कुसुमानाञ्च, चित्रै –आलेख्यै, विचित्रितस्य–विभूषितस्य । विविधै –अनेकप्रकारै, वर्णै –रङ्गै, वर्णनीयानि–रञ्जनीयानि, यानि स्तम्भशतानि–अनेकान्याधारभूतानि, तै, उच्छ्रितस्य–उन्नतस्य । पुष्कलानाम्–पुष्टानाम्, दाम्नाम्–रज्जूनाम्, शतै, आकृष्टस्य बद्धस्य च । कौशेयोल्लोचस्य–पट्टसूत्रीयवितानस्य । आस्तीर्णेषु–विस्तीर्णेषु । कौशेयास्तरणेषु–पट्टसूत्रनिर्मितासनेषु । महासभा–विशाला समिति ।

कनकसूत्रै –हैरण्यतन्तुभि, गुम्फित –ग्रथित, प्रान्तो यस्य तादृशेन, आसनेन–प्रावरणविष्टरेण, आच्छादितायाम्–गोपितायाम् । वितस्त्युच्छ्रा-

---

आलस्य को दूर कर दिए जाने पर, सूर्यमण्डल के पश्चिम दिशा की ओर अवनत हो जाने पर, प्रचण्ड सूर्यकिरण के सम्पर्क के कारण अल्प सन्तप्त वायु के आघात के प्रभाव से पेड-पौधे और लताओ के शाखा-प्रशाखा-फल-पत्र के सूख जाने पर ( मुरझा जाने पर ) आगामी सन्ध्या समय से दो घण्टे पूर्व रुद्रमण्डल के महान् प्रासाद के सामने विशाल प्राङ्गण मे सुवर्णसूत्रो के समूह से निर्मित लताओ, फूलो तथा अनेकानेक चित्रो से विभूषित रङ्ग-बिरङ्गे खम्भो पर उत्तोलित, सैकडो मजबूत रस्सियो से आकृष्ट रेशमी शामियाने के नीचे बिछे रेशम के गद्दो पर वह विशाल सभा समायोजित हुई ।

साधुवाद-पारितोषिकादि-वितरणैः प्रदर्शित-युद्ध-कौशलान् भटानधिक-मुत्साहयितु सभा भवित्री, तत्रोपस्थाय महाराजेन द्विगुण सनाथनीया समिति "—इति ।

तस्मिस्तथा प्रस्थिते दुर्ग-प्राचीर-द्वारादिस्थानेषु यथोचित विश्वस्त-चिरन्तन-स्वामिभक्त-भटानायोज्य, सभा-स्थान परिष्कर्तु काश्चिदा-दिश्य, स्वमनसि स्वास्थ्यमाससाद ।

अथ तथाऽनुष्ठितवत्स्वखिलेषु विहित-भोजनादि-क्रिये परत किञ्चिन्निद्रा-मुद्रयेव विद्रावित-मान्थर्ये जयपुराधीश्वरे, पश्चिमायामव-नमति मार्तण्ड-मण्डले, चण्ड-मरीचिप्रचयेपत्प्रतप्त-वाताऽऽघात-प्रताप-

---

भागे । द्वादशवादनादूर्ध्वमिति यावत् । उत्साहयितुम्—ससाहसयितुम् । उप-स्थाय—समागत्य । सनाथनीया—कृतार्थनीया, समिति—सभा ।

विश्वस्तान्—जातविश्वासान्, चिरन्तनस्वामिभक्तान्—प्राचीनाधिपति-सेवकान् । आयोज्य—सलग्य्य । परिष्कर्तुम्—स्वच्छयितुम् । स्वास्थ्यम्—कृतकृत्यताऽऽनन्दम्, आससाद—प्राप ।

अनुष्ठितवत्सु—कृतवत्सु । निद्रामुद्रया—स्वापभङ्ग्या । विद्रावित-मान्थर्ये—दूरीकृतालस्ये । अवनमति—नम्रीभवति । चण्डमरीचीनाम्—भास्क-

---

उनसे निवेदन करना कि युद्ध मे कौशल दिखलाने वाले महाराष्ट्रीय वीरो को साधुवाद तथा पारितोषिक आदि देकर अत्यधिक उत्साहित करने के लिए रुद्रमण्डल के प्रासाद मे ही आज दोपहर के समय एक सभा होने वाली है, उस अवसर पर वे वहाँ आकर इस सभा को द्विगुण कृतार्थ करे।

महाराष्ट्रराज की आज्ञा से गौरसिंह के वहाँ से प्रस्थान कर देने के बाद दुर्गप्राचीर तथा प्रवेशद्वार आदि स्थानो पर विश्वासपात्र, चिर परिचित तथा स्वामिभक्त वीरो को नियुक्त कर स्वयम् सभाभवन की सफाई के लिए कुछ अनुचरो को आदेश देकर महाराष्ट्रराज ने निश्चिन्तता की साँस ली।

तदनन्तर महाराष्ट्रराज के आदेश के अनुसार सभी आदिष्ट अनुचरो द्वारा अपने-अपने कृत्य के सम्पादित हो जाने पर, भोजनादि क्रिया सम्पन्न करने के बाद कुछ निद्रा के बहाने जयपुराधीश्वर द्वारा आगमन-श्रान्तिजन्य अपने

शुष्यत्फलपत्र-शाखाप्रशाखेषु वृक्ष-क्षुप-व्रतती-व्रजेषु, होराद्वयात् परत एव सम्पत्स्यमाने सायङ्काले रुद्रमण्डलस्य-महाप्रासाद-सम्मुखे प्रवितत-भूभागे सुवर्ण-सूत्र-प्रचय-रचित-लता - कुसुम - चित्र - विचित्रितस्य, विविध-वर्ण-वर्णनीय-स्तम्भ - शतोच्छ्रितस्य, पुष्कल - दाम-शताकृष्ट-बद्धस्य, कौशेयोल्लोचस्या-धस्ताद् आस्तीर्णेषु कौशेयाऽऽस्तरणेषु महासभा समतिष्ठत।

तत्र हि कनकसूत्र-गुम्फित-प्रान्तासनाच्छादितायामेकस्या वित-

---

रदीधितीनाम्, प्रचयेन–समूहेन, ईषत्प्रतप्तस्य–उष्णप्रायस्य, वातस्य–वायो, आघातप्रतापेन–ताडनतेजसा, शुष्यन्त –शोषमुपगच्छन्त, फलपत्रशाखाप्रशाखा येषा तेषु। वृक्षा –अनोकहा, क्षुपा –ह्रस्वशाखा, व्रतत्य –लता, एतासा व्रजेषु–समूहेषु। सम्पत्स्यमाने–भाविनि। प्रवितते–अतिविस्तीर्णे, भूभागे–भूप्रदेशे। सुवर्णसूत्रप्रचयेन–हैरण्यतन्तुसमूहेन, रचितै –निर्मितै, लताना कुसुमानाञ्च, चित्रै –आलेख्यै, विचित्रितस्य–विभूषितस्य। विविधै –अनेकप्रकारै, वर्णै –रङ्गै, वर्णनीयानि–रञ्जनीयानि, यानि स्तम्भशतानि–अनेकान्याधारभूतानि, तै, उच्छ्रितस्य–उन्नतस्य। पुष्कलानाम्–पुष्टानाम्, दाम्नाम्–रज्जूनाम्, शतै, आकृष्टस्य बद्धस्य च। कौशेयोल्लोचस्य–पट्टसूत्रीयवितानस्य। आस्तीर्णेषु–विस्तीर्णेषु। कौशेयास्तरणेषु–पट्टसूत्रनिर्मितासनेषु। महासभा–विशाला समिति।

कनकसूत्रै –हैरण्यतन्तुभि, गुम्फित –ग्रथित, प्रान्तो यस्य तादृशेन, आसनेन–प्रावरणविष्टरेण, आच्छादितायाम्–गोपितायाम्। विततस्त्युच्छ्रा-

---

आलस्य को दूर कर दिए जाने पर, सूर्यमण्डल के पश्चिम दिशा की ओर अवनत हो जाने पर, प्रचण्ड सूर्यकिरण के सम्पर्क के कारण अल्प सन्तप्त वायु के आघात के प्रभाव से पेड-पौधे और लताओ के शाखा-प्रशाखा-फल-पत्र के सूख जाने पर ( मुरझा जाने पर ) आगामी सन्ध्या समय से दो घण्टे पूर्व रुद्रमण्डल के महान् प्रासाद के सामने विशाल प्राङ्गण मे सुवर्णसूत्रो के समूह से निर्मित लताओ, फूलो तथा अनेकानेक चित्रो से विभूषित रङ्ग-विरङ्गे खम्भो पर उत्तोलित, सैकडो मजबूत रस्सियो से आकृष्ट रेशमी शामियाने के नीचे बिछे रेशम के गद्दो पर वह विशाल सभा समायोजित हुई।

स्त्युच्छ्राय-तूलिकाया महोपवर्हे-लग्न-पृष्ठो जयपुराधीश्वर उपविष्ट । तत्रैव च तद्वामतो महाराष्ट्र-राष्ट्र-त्रिविष्टपेष्टोऽपि समवर्तिष्ट । परितो यथाधिकार क्रमतो द्वयोरपि राज्ञो कृपा-पात्राण्युपविष्टानि । वितान परितश्च वद्धपङ्क्तयो योद्धार सुसज्जा समतिष्ठन्त । प्रभाकर-प्रभा-प्रचय-प्रपात-प्रहतानाम्, तत्कटिवद्ध-महारजत-रजतादि-पट्टिकानाम्, स्कन्धोन्नमित-शक्ति-भल्लानाम कटि-विलम्वित-कृपाण-सौवर्ण-त्सरू-णाम्, वेष्टित-गण्ड-युगल-चिवुकानाम्, राजत-लेप-लिप्त-लोह-शृङ्खलो-ष्णीषिका-वन्धनाना च चाकचक्यम् अवलोचकलोचनमतीतडत् ।

---

यायाम्—अधस्तान्नतायाम्, तूलिकायाम्—तूलवत्याम् । महोपवर्हे—महोपधाने, लग्न पृष्ठ यस्य स । महाराष्ट्रराष्ट्रमेव त्रिविष्टपम्—स्वर्ग, तस्य इष्ट—अभिमत । समवर्तिष्ट—समस्थित । कृपापात्राणि—दयाभाजनानि । वितान परित—उल्लोचस्य चतुर्दिक्षु । "अभित परित" इत्यादिना द्वितीया । प्रभाकर-प्रभाप्रचयस्य—भास्करभासमूहस्य, प्रपातै—प्रपतनै, प्रहतानाम्—ताडितानाम् । भासितानामिति यावत् । तत्कटिषु—वीराणा मध्यभागेषु, महारजतस्य—सुवर्णस्य, रजतस्य—दुर्वर्णस्य, आदिना रीत्यादेश्च, पट्टिकानाम् । स्कन्धेषु, उन्नमितानाम्—उन्नमय्य स्थापितानाम्, शक्तीना भल्लानाञ्च । कटि-विलम्बितानाम्, कृपाणानाम्, सौवर्णाना त्सरूणाञ्च । राजतलेपेन लिप्तानाम् लौहशृङ्खलाभिन्नानाम् उष्णीषिकावन्धनानाम् । चाकचक्यम्—चमत्कृति । अवलोचकलोचनम्—द्रष्टृनयनम् । अतीतडत्—अजीघतत्, अभिभूत चकारे-

---

उस सभा मे सुवर्णसूत्रो से जडी किनारी वाली चादर से आच्छादित एक बित्ता ऊँचे गद्दे पर एक विशाल तकिये पर पीठ रख कर जयपुर महाराज बैठ गये । उनकी बाँयी ओर महाराष्ट्रराष्ट्ररूपी स्वर्ग के इष्टदेव शिवाजी भी बैठ गये । उनके चारो तरफ उन दोनो के कृपापात्र अन्यान्य व्यक्ति भी अपने-अपने अधिकार के अनुसार बैठ गये । शामियाने की सब दिशाओ मे सुसज्जित वीरो की मण्डली पङ्क्तिवद्ध होकर खडी थी । सूर्यकिरण के सम्पर्क से चमकने वाले उन वीरो के सोने तथा चाँदी के बने कमरबन्दो, कन्धो पर रखे हुए शक्तियो तथा रीछो, कमर मे लटकते कृपाणो तथा उनकी सुवर्ण की मूठो, वेष्टित कपोल-युगल तथा दाढी रूपहली लौहशृखला की चमक, दर्शको की आँखो

कलित-महाध्वजा परित प्रसर्पिणो वीराश्च सभेरीनाद श्रीशिवराजस्य महाराज-जयसिंहस्य च जयमजूघुषन् ।

ततो महाराष्ट्रराज सक्षेपेण रुद्रमण्डल-विजय-वृत्तान्तमश्रावयत् जयसिंहम् । स च ससाधुवादमखिलानुत्साहयाम्बभूव । ततो महाराष्ट्र-राजो गौरसिंह-श्यामसिंह-क्रूरसिंह-माल्यश्रीकादीन् प्रत्येकमङ्गुल्या निर्दिश्योक्तवान्-एत एव प्राधान्येन विहितसाहाय्या मम—इति । जय-सिंहश्च तान् प्रशशस, स्वहस्तेन चैकैकमसिधेनुकादानेन पर्यतोपयत् ।

अथ रघुवीर निर्दिश्य शिवराज कथितवान्-"महाराज ! एष एव वीरबालो रुद्र-मण्डल-जयस्य प्रधान-कारणम् । अयमेव प्रथम युद्धमार-ब्धवान्, अयमेव शर-प्रपातमगणयित्वा प्रथम प्राचीरमारूढ, अयमेव रिपु-निकर-व्याप्ते दुर्गे प्रथम सोत्फालमन्त प्रविष्ट, अयमेव दुर्गाध्यक्ष

स्थर्य । कलितमहाध्वजा —धारितविजयवैजयन्तीका । प्रसर्पिण —गच्छन्त । अजूघुषन्—घोषितवन्त ।

अङ्गुल्या—करशाखया । प्राधान्येन—वैशिष्ट्येन । एकैकम—प्रत्येकम् । असिधेनुकाया —छुरिकाया, दानेन—समर्पणेन ।

शराणाम्—इषूणाम्, प्रपातम्—घोरपतनम् । रिपुनिकरव्याप्ते—शत्रु-

को चकाचौंध करती थी । विशाल ध्वजाओ को हाथो मे लेकर चारो तरफ घूमने वाले वीर डङ्का बजाकर शिवाजी तथा महाराज जयसिंह की विजयध्वनि कर रहे थे ।

बाद मे महाराष्ट्रराज ने जयसिंह को रुद्रमण्डल पर विजय प्राप्त करने की घटना को सक्षिप्त रूप मे सुनाया और महाराज जयसिंह ने भी साधुवाद देते हुए सबो को प्रोत्साहित किया । तत्पश्चात् शिवाजी ने गौरसिंह, श्यामसिंह, क्रूरसिंह तथा माल्यश्रीक आदि प्रत्येक वीर की ओर उगली से इशारा करते हुए कहा—ये ही वीर है जिन्होने मुख्य रूप मे मेरी सहायता की है । उस पर जयसिंह ने उन सबकी प्रशसा की और अपने हाथ से प्रत्येक को पारितोषिक के रूप मे एक-एक तलवार समर्पित की ।

तदनन्तर रघुवीरसिंह की ओर निर्देश कर शिवाजी ने कहा—महाराज ! रुद्रमण्डल पर विजय पाने मे प्रधान कारण यही वीर बालक है । प्रथमत इसने

निगृहीतवान्, अयमेव च परस्तात् समापतन्ती यवनसेना त्रिगुणामत्यल्पीयस्या सेनया पराजेष्ट"।

तदाकर्ण्य सर्वे प्रासीदन् ऋते दन्दह्यमानहृदयात् क्रूरसिहात्। अम्बराधीशस्तूत्थाय तस्मै स्वहस्तस्य महासिमयच्छत, साधुवादेन च समतूतुषत्। सोऽपि राजद्वय प्रणम्य, असि कटिदेशे लम्बयित्वा, निर्दिष्टस्थाने उपाविक्षत्। महाराष्ट्रेश्वरश्च "अय पाञ्च-साहस्त्रिकतायोग्य"—इति शनैरम्बरेशकर्णे आलपत्, सोऽपि चान्वमूमुदत्। किञ्चित् किञ्चिदिदमनेकैरेव श्रुतम्। क्रूरसिहस्तु तदाकलय्य शूलेनेव कर्णयोस्तोद्यमानो भ्रुवावाकुञ्च्य, मुखमवनमय्य तथैवास्थात्।

---

समूहावृते। अत्यल्पीयस्या—अतितरा न्यूनया। पराजेष्ट—परास्तवान्।

प्रासीदन्—प्रसन्ना अभूवन्। समतूतुषत्—सन्तोषितवान्। पाञ्चसाहस्त्रिकताया—पञ्चसहस्रसैनिकाध्यक्षताया, योग्य—अर्ह। अन्वमूमुदत्—अनुमोदितवान्। तोद्यमान—सङ्क्र्त्यमान। आकुञ्च्य—वक्रीकृत्य।

---

ही युद्ध का प्रारम्भ किया था, बाणो की वर्षा की परवाह किए बिना ही प्राचीर पर सर्वप्रथम चढने वाला भी यही है, शत्रुसमूह से व्याप्त दुर्ग के मध्य कूद कर प्रथम प्रवेश करने वाला भी यही है, दुर्गाध्यक्ष रहमत खाँ को पकडने वाला भी यही है और आगे से आती हुई (अपनी सेना से) त्रिगुण यवनसेना को अपनी छोटी सेना से पराजित करने वाला भी यही है।

महाराष्ट्रराजकृत रघुवीरसिंह की प्रशसा सुनकर जलते हृदय वाले क्रूरसिंह से अतिरिक्त सब प्रसन्न हो उठे। महाराज जयसिह ने तो उठकर अपने हाथ का विशाल खड्ग ही रघुवीरसिंह को दे दिया और साधुवाद से भी प्रसन्न किया। रघुवीरसिंह भी दोनो महाराजो को प्रणाम कर जयसिह द्वारा प्रदत्त खड्ग को कमर मे लटका कर अपने स्थान पर जाकर बैठ गया। महाराष्ट्रराज ने धीरे से महाराज जयसिंह के कानो मे कहा—'यह पाँच हजार सेना की अध्यक्षता करने योग्य है' और जयसिंह ने भी उसका अनुमोदन किया। उस बात को और लोगो ने भी थोडा-बहुत सुन लिया। किन्तु उसे सुनकर अपने कानो मे शूल के आघात का अनुभव करने वाला क्रूरसिंह भौहो को आकुञ्चित कर, मुख को अवनत कर बैठा रहा।

ततो महाराष्ट्रेश्वराज्ञया सर्वेऽपि निगृहीता वीरा आनायितास्त्यक्ताश्च। ततो दुर्गाध्यक्षो रहोमत्तखानोऽपि तत्र समानीतो निर्मुक्तबन्धनस्सम्मुखमवनतशिरा स्थित। तमालोक्य महाराष्ट्रराज उवाच— "वीर! साधु दर्शितवानसि युद्ध-कौशलम्। उचितमाचरितवानसि स्वामि-पिण्डस्य। जय पराजयश्च न स्वाधीन। यदि विजितोऽसि, बद्धोऽसि, ततो व्रीडा नोचिता। पलायन वा, रक्ष रक्षेति रोदन वा व्रीडास्पदम्, न तु वीरता-पुरस्सर बन्धो वा प्राणत्यागो वा। तदधुना मुक्तोऽसि। रोचते चेत् अस्माननुसर, अथ वा स्वच्छन्द विजयपुरेश्वरमेवानुसर"।

स तु "वीरराज! अत्यन्तमुपकृतोऽस्मि औदार्य्येणानेन, किन्तु यस्मिन् हस्ते विजयपुर-रक्षार्थ खड्ग वहन् जीवन यापितवानस्मि,

---

निगृहीता–वारकीकृता। निर्मुक्तबन्धन–विगलनिगड। अवनतशिरा–नम्रमस्तक। स्वामिन पिण्डस्य–अन्नादे। व्रीडा–त्रपा। व्रीडाया, आस्पदम्–स्थानम्। मुक्त–परित्यक्त। अनुसर–अनुव्रज। स्वच्छन्दम्–स्वतन्त्रम्। क्रियाविशेषणम्।

---

तदनन्तर महाराष्ट्रराज की आज्ञा से पकड लिये गये सभी शत्रुपक्षीय वीर वहाँ लाये गये और मुक्त भी कर दिये गये। उसके बाद रहमत खाँ को भी वहाँ लाया गया और बन्धन से मुक्त कर दिये जाने पर वह उन (महाराष्ट्रराजप्रभृति) के सम्मुख मुँह झुकाकर खडा रहा। उसे देखकर महाराष्ट्रराज ने उससे कहा—वीर! तुमने अपनी युद्धकुशलता का पूर्ण प्रदर्शन किया है। तुमने स्वामी के दिये अन्नपानादि के अनुरूप काम भी किया है। युद्ध मे जय या पराजय अपने वश की बात नही है। यदि युद्धभूमि मे तुम जीत भी लिये गये हो, पकड भी लिये गये हो, और बाँध भी लिये गये हो, तब भी तुम्हे लज्जित होना उचित नहीं है। युद्धक्षेत्र से भाग जाने या शत्रुओ के समक्ष 'त्राहि त्राहि' करने मे लज्जा है, वीरता का प्रदर्शन करते हुए बन्धन मे आ जाना या प्राणत्याग लज्जास्पद नही है। अब तुम मुक्त कर दिये गये। मन चाहे तो हमारे

नास्मिन्नेव दग्धहस्ते विजयपुर-विरोधिना साहाय्याय निस्त्रिंशमाकलयितुमुत्सहते मे चेत"—इत्युक्तवान्।

तत शिवराजेन यथोचित विधेहीत्युक्त, गच्छन् कतिभिश्चिदेव पदै परावृत्य पुन प्रोक्तवान्—"महाराज! वृद्धोऽसौ बहुभिर्युद्धवान्, किन्तु न भवादृशो वीरराज एव दृष्ट, न वा भावत्का इव योद्धार एव दृष्टा। तथाऽपि निविवेदयिपामि यद् भवत्सेनासु न सर्व एव राजभक्ता सन्ति। केचन विद्रोहिणोऽपि कपटेन स्व राजभक्त प्रदर्श्य भवत्कृपा-पात्रतामपि वहन्तो गूढ विद्रोहमाचरन्ति। तादृशेनैव केनचित् प्रथममेव सतर्कीकृता वयम्, अन्यथा अल्पेनैवाऽऽयासेन जय्यमा-

दग्धहस्ते–भागधेयरहितकरे। आकलयितुम–धारयितुम्।

विधेहि–कुरु। पदै–चरणै। परावृत्य–निवृत्य। निविवेदयिषामि–निवेदयितुमिच्छामि। विद्रोहिण–शत्रव। भवत्कृपापात्रताम्–भवदीयदयाभाजनताम्। सतर्कीकृता–सावधानीकृता। सूचिना आक्रमणसम्बन्ध इति यावत्। आयासेन–श्रमेण। जय्यम्–जेतु

साथ रहो और नही तो पुन स्वच्छन्द होकर विजयपुरेश्वर के पास ही लौट जाओ।

शिवाजी की बात सुनकर रहमत खाँ ने कहा—वीरराज! आपकी इस उदारता का मैं बहुत ही कृतज्ञ हूँ। किन्तु जिस हाथ मे विजयपुर की रक्षा के लिये खड्ग ढोकर मैने अपना सारा जीवन व्यतीत किया है, उसी अभागे हाथ मे विजय-पुराधीश्वर के विरोधियो की सहायता के लिये खड्ग उठाने मे मेरा मन उत्साहित नही हो रहा है।

तदनन्तर—जैसा उचित मालूम पडे वैसा ही करो—इस प्रकार शिवाजी द्वारा कहे जाने पर रहमत खाँ वहाँ से विजयपुर के लिये चल पडा। कुछ ही पग बढने के बाद लौट कर शिवाजी से उसने कहा—महाराज! इस वृद्ध ने बहुतो के साथ युद्ध किया, परन्तु न तो आज तक तक इसने आप जैसे वीर को ही देखा था और न आपके योद्धाओ के समान योद्धाओ को ही। फिर भी मै कुछ निवेदन कर देना चाहता हूँ—आपकी सेना मे सभी राज-भक्त नही है। कुछ राजद्रोही भी छल से अपने को राजभक्त

सीद् भवादृशेन दुर्गमास्माकीनम्। तत्सानुसन्धान शोधनीया स्वसेना, व्रजाम्यहम्"—इति उक्त्वा प्रचलित ।

महाराष्ट्रराजस्तु कोपारुणीकृतनयन परित पश्यन्, सर्वान् सेनापतीन् सम्मुखमेक-लेखायामुत्थाय स्थातुमाज्ञप्तवान्। सर्वेपु तथा कृतवत्सु चोक्तवान्-हन्त भो! महाराष्ट्र-मण्डलेऽपि स्वामिविद्रोह ? अपीद रोचते युष्मभ्यम् ?

सर्वे—विद्रोहाचरण महापापम्, न रोचतेऽस्मभ्यम्।

महाराष्ट्रराज – न रोचते चेद्, यदि ज्ञायते सपदि कथ्यता को विद्रोहीति ?

---

शक्यम्। "क्षय्यजय्या शक्यार्थे"। सानुसन्धानम्—सपरामशम्। शोधनीया—परिष्करणीया।

कोपारुणीकृतनयन —क्रोधलोहितीकृतनेत्र । एकलेखायाम् – एकस्या पङ्क्तौ ।

---

दिखला कर आपके कृपापात्र भी वने हुये है और छिपकर आपका विद्रोह भी किया करते है। उन्ही राजद्रोहियो मे से किसी व्यक्ति द्वारा हम लोग भी पहले ही सतर्क कर दिये गये थे, नही तो हम लोगो का दुग आपके लिये थोडे ही आयास से जीतने योग्य था। अत अनुसन्धान-पूर्वक आप अपनी सेना की जाँच कर ले, मैं तो अव चल रहा हूँ—यह कह कर वहाँ से चल पडा।

उस पर कोपारुण नेत्र वाले महाराष्ट्रराज ने चारो तरफ देखकर सभी सेनापतियो को अपने सामने पक्तिवद्ध होकर खडे हो जाने की आज्ञा दे दी। जव उनकी आज्ञा पाकर सव सेनापति उनके समक्ष पङ्क्तिवद्ध होकर खडे हो गये तव शिवाजी ने उन सवसे कहा—क्यो भाइयो! महाराष्ट्रमण्डल मे भी राजविद्रोह! क्या यह बात आप लोगो का अच्छी लग रही है!

सब—जी नही, विद्रोह करना तो महापाप है, हम लोगो को यह च्छा नही लगता।

महाराजराष्ट्र—यदि अच्छा नहीं लगता तो यदि आप लोगो को पता हो तो वतलाइये कि कौन विद्रोही है ?

सर्वे—न जानीमहे। न जानीमहे।

तत क्षण सम्पूर्णा सभा निर्मक्षिकमश्चारा मवृत्ता। मर्वेऽपि "कस्य प्राणा अवसन्ना ? कम्य जीवन समाप्तम् ? को मृत्युना वीक्षित ? को वा कृतान्तेन पाशित ?" इति चिन्तयन्तस्तूष्णीका जडीकृता इव, चित्र-लिखिता इव चावर्तन्त।

अथ पुनरेव निर्णेतुमारब्धवान् महाराष्ट्रपति।

महाराष्ट्रराज—अथ ज्ञायते ह्य कश्चिद् अनुपस्थितो वा, विलम्ब्य समायातो वा ?

क्रूरसिंह—महाराज! कश्चन श्रीचरणानामनुग्रह-पात्रमेव विलम्ब्य समागत, प्राणदान-प्रतिज्ञया सनाथ्येय चेत् कथयेय नामापि।

महाराज—न भय ते। कथय केन विलम्बितम् ?

---

निर्मक्षिकसञ्चारा—मक्षिकासञ्चारेणापि शून्या। अवसन्ना—समाप्त-प्राया। पाशित—बद्ध। जडीकृता इव—स्तब्धीकृता इव।

प्राणदानप्रतिज्ञया—असुरक्षणसन्धया। सनाथ्येय—सनाथित स्याम्।

---

सब—हम लोग नही जानते, नही जानते।

उसके बाद सारी सभा थोडी देर के लिए स्तब्ध हो गई। "किसके प्राण जाने वाले है ? किसका जीवन-काल समाप्त हो चुका है ? किसे यमराज ने देख लिया है ? किसे यमराज ने अपने पाश मे फँसा लिया ?" इस तरह सोचते हुये जडवत् तथा चित्रवत् सभी मौन होकर खडे रहे।

तत्पश्चात् महाराष्ट्रराज ने पुन निम्नलिखित रूप मे निर्णय करना प्रारम्भ कर दिया।

महाराष्ट्रराज—अच्छा तो यह ज्ञात है कि कल कोई अनुपस्थित या विलम्ब से यहाँ आया था ?

क्रूरसिंह—महाराज! आपका कोई कृपापात्र व्यक्ति ही कल विलम्ब से आया था। यदि आप मुझे प्राणदान की प्रतिज्ञा करें तो मैं उस व्यक्ति का नाम भी बतला दूँ।

महाराज—किसी प्रकार का भय मत करो। कहो—किसने यहाँ आने मे विलम्ब किया था ?

क्रूरसिह —रघुवीरसिंहोऽत्यन्तविलम्बेनाऽऽगत ।

[ तत सर्वेषु क्षण चकितेषु निभृतश्चावस्थितेषु ]

महाराज —मूर्ख ! सत्य कथय । दृष्टवानस्मि रघुवीरस्य पौरुष भक्ति च, न तव मिथ्या-कलङ्केनाङ्कित भवेद् रघोर्यश । रघुवीरस्योन्नतिमाकलय्य खिद्यसे—इति प्रलपसि । तत्सत्य वद, अन्यथाऽधुनैव न भवसि ।

[ इति शक्तिमुदतूतुलत् ]

रघुवीर —[ सपद्यञ्जलिं बद्ध्वा ] महाराज ! मिथ्या नाभिधत्ते । सत्यमह किञ्चिद् विलम्ब्य समायात । क्रूरो न हन्तव्य ।

तदाकर्ण्य, सकलाऽपि सभा जडीकृतेव, मोहितेव, समाहितेव च सवृत्ता । अथ पटान्तेन स्वेदमपहृत्य शिवराज क्रूरेण चक्षुषा रघुवीर दिधक्षन्निव समगादीत् ।

---

पौरुषम्–पुरुषार्थम् । भक्तिम्–एकतानसेवाम् । प्रलपसि–अनन्यप्रलाप करोषि । न भवसि–मृतो भवे ।

समाहिता–सावधाना । किमग्रे भावीति समवलोकयितुम् ।

---

क्रूरसिह—रघुवीर सिह बहुत विलम्ब से आया था । [ उसपर सबके कुछ देर तक चकित तथा मौन होने पर ]

महाराज—अरे मूर्ख ! सच बतलाओ । मै रघुवीर की वीरता तथा राजभक्ति देख चुका हूँ । तुम्हारे मिथ्याकलङ्क से रघुवीर का यश मलिन नही होने वाला ह । तुम इसी लिये प्रलाप कर रहे हो कि रघुवीरसिह की उन्नति देखकर तुम्हारा हृदय जल रहा हे । अत ठीक ठीक बतलाओ, नही तो अभी-अभी समाप्त हो जाओगे । [ यह कहकर महाराष्ट्रराज ने अपनी 'शक्ति' को उठा लिया ]

रघुवीर—[ तत्क्षण हाथ जोडकर ] महाराज ! क्रूरसिह झूठ नही कह रहे ह । मै सचमुच कुछ विलम्ब से कल आया था । क्रूरसिह को आप न मारे ।

रघुवीर सिह की बात सुनकर सारी सभा जडपदार्थ-सी, मूर्च्छित-सी और समाधिमग्न-सी हो गई । तत्पश्चात् पसीना पोछ कर शिवाजी ने अपनी क्रूर दृष्टि से रघुवीर सिह को देखा, मानो अपनी क्रोधाग्नि से वे उसको जलाना चाह रहे थे और कहा भी ।

शिवराज —मूढ ! तर्हि किमिति विलम्ब्य ममायातोऽसि ?

क्रूरसिंह —[ रघुवीराभिमुखम् ] कथय, कारण कथय।

शिवराज —क्षिप्र कथय ! कि न वेत्सि मदाज्ञा-ममुल्लङ्घनस्योल्वण फलम् ? यद्विलम्बितवानसि।

[ ततो भुवमालोकयन्, वद्धकर-सम्पुटो रघुवीर किमपि न प्रावोचत्। तदाकलय्याधिक शङ्कितो महाराष्ट्रराज पुनरवादीत् ]

महाराष्ट्रराज —मूढ ! विद्रोहिन् ! मिथ्यैव स्वामिभक्ति प्रकटयसि ?

रघुवीर —प्रभो ! विद्रोहो मिथ्याऽऽचारो वा नास्मत्कुल-धर्म ।

महाराज —तत्किमिति विलम्बितवानसि ?

रघुवीर —[ मनसैव 'सौवर्णि ! तव साक्षात्कार एव विलम्ब-कारणम्, तदत्र कि कथयामि ?''—इति विभावयन भुवमालोकयन् पाद-नखेन धरा-

---

उल्बणम्—कठिनम्।

मिथ्याचार –असदाचरणम्। अस्माक कुलधर्म –अन्वयकर्त्तव्यम्।

---

शिवराज—मूढ ! ता विलम्ब से क्यो आये थे ?

क्रूरसिह—[ रघुवीर सिंह की ओर देखकर ] कहो कहो, देर से आने का कारण बतलाओ।

शिवराज—शीघ्र बतलाओ ! क्या तुम मेरी आज्ञा के उल्लङ्घन के कठोर परिणाम को नही जानते थे कि यहाँ विलम्ब से आये थे !

[ तदनन्तर नीचे की ओर देखता हुआ हाथ जोड कर खडा रघुवीर कुछ नही बोला। यह देख कर और भी अधिक सन्दिग्ध महाराष्ट्रराज ने पुन कहा]

महाराष्ट्रराज—मूढ ! विद्रोही ! झूठी स्वामिभक्ति ही दिखला रहे हो ?

रघुवीर—प्रभो ! विद्रोह करना या मिथ्याचार करना मेरे कुल का धर्म नही है ।

महाराज—तो फिर विलम्ब तुमने क्या किया ?

रघुवीर—[ प्यारी सौवर्णी ! तुम्हारा मिलना ही यहा मेरे विलम्ब से आने का कारण है–इस बात को मन ही मन सोचता हुआ, जमीन की ओर

दलमुल्लिखन् नि शब्द एव समस्थित ]

महाराज —[ अत्यन्त खिन्न , स्विन्नश्च पटान्तेन स्वेद परिहृत्य ] कथ स्वप्नमिव पश्यामि । यस्यैव मधुरा गी , यस्यैव पराक्रम , स एव च्छली ॥

रघुवीर —महाराज ! अनीहमानस्यापि मे विलम्बो जात , किन्तु छल वा स्वामि-विद्रोह वा न जानामि ।

महाराज —मूढ ! ईदृशै कथनै प्राण-रक्षा-यत्नो व्यर्थ ।

रघुवीर —प्रभो ! स्वामिनोऽन्नेन पुष्टमिद शरीरम्, स्वामिन एव कृपाणेन विलीढ भवतु । यस्य तोषश्चिरमजीवयत् , तस्यैव रोषो व्यापादयतु । नाह प्राणरक्षार्थं यते, न वाऽपराध-क्षमा याचे । किन्तु यत् सत्य तद् ब्रवीमि, नाह स्वामि-विद्रोहापराधी, न वा छल जाने, किन्तु न जाने केषा दुरदृष्टाना फल-स्वरूपो मे विलम्ब समभूत् । सत्यमिति

---

नि शब्द –मौनी ।

स्विन्न –घर्मविन्दुव्याप्त ।

अनीहमानस्य–अनिच्छत ।

विलीढम्–विनष्टम् । तोष –प्रसन्नता । व्यापादयतु–मारयतु । दुरदृष्टानाम्–दुर्भाग्याणाम् ।

---

दृष्टि लगाये पैर के नख से पृथ्वीतल को ख़रोंचता हुआ, चुप ही खडा रहा ]

महाराज —[ अत्यन्त खिन्न तथा पसीने से तरबतर हो जाने के कारण कपडे से पसीना पोछ कर ] आ ! क्या मैं स्वप्न देख रहा हूँ ! जिसकी इस तरह की मधुर वाणी, जिसका इस तरह का पराक्रम, वही छल करने वाला भी है ।

रघुवीर—महाराज ! नही चाहने पर भी मुझे यहाँ आने मे विलम्ब तो अवश्य हो गया था, परन्तु छल या राजविद्रोह का तो मैं नाम भी नही जानता ।

महाराज—मूढ ! इस प्रकार के कथनो से अपने प्राण की रक्षा के लिये तुम्हारा सारा प्रयास निरर्थक है ।

रघुवीर—प्रभो ! आपके अन्न से यह शरीर पला है और आज आप के कृपाण से ही विनष्ट भी हो जाय ! जिसके सन्तोष ने मुझे इतने दिनो तक

कथयामि। विलम्बापराधस्य जीविकाच्छेदो वा शिरश्छेदो वा यथा रोचेत, तथा दण्डो विधेय । विद्रोहाचरणन्तु न कृतवानस्मि।

महाराज —वाचाल ! कपटिन ! तिष्ठ ! पश्यन्तु सर्वे, विद्रोहिणो दण्डम् । [ इति शक्तिमुदतिष्ठिपत् ]

रघुवीर —महाराज ! अत्र भवतो भ्रमापनोदनाय तत्त्व कथितवानस्मि। वाचालो नास्मि। अस्मत्कुल कपटस्य कथामपि न जानाति। जननीमपि न स्मरामि, बालस्यैव तातोऽपि सागरे मग्न । प्रभुरेव जननी, जनक , ईश्वरश्च। यदि मृतेऽपि वृद्धो गुरुर्वा नववयस्का एका अपरा व्यक्तिर्वा रोदिष्यति, नाऽन्य । श्रीमतश्चरण ध्यायन् सुखेन

वाचाल !–मिथ्या बहुभाषिन् ।

भ्रमापनोदाय–भ्रान्तिदूरीकरणाय ।

नववयस्का एका अपरा व्यक्ति –एतेन गूढतया विलम्बकारण प्रदर्शितम्, किन्तु दौर्भाग्यात्सौभाग्याद्वा तदानी न शिवेनावधारितम् ।

जिलाया ह, उसी का रोप आज मार भी डाले । म अपनी प्राणरक्षा की चेष्टा नही करता और अपने अपराध के लिये क्षमा भी नही चाहता। किन्तु जो सत्य है उसे मैं बतला रहा हूँ—म स्वामि-विद्रोहात्मक अपराध करने वाला नही हूँ और छल करना भी नही जानता। किन्तु न जाने मेरे किस दुर्भाग्य का यह परिणाम ह कि कल मुझे यहाँ आने मे विलम्ब हो गया। मैं सच कह रहा हूँ—विलम्बात्मक अपराध के लिये,जिस प्रकार का दण्ड, जीविकाच्छेद या शिरश्छेदन, आप उचित समझे, मुझे दे, किन्तु मैने विद्रोहात्मक कार्य तो नही किया है।

महाराज—वाचाल ! कपटी ! ठहरो ! विद्रोही को दिये जाने वाले दण्ड को सब लोग देखें। [ यह कहकर उन्होने अपनी 'शक्ति' उठा ली ]

रघुवीर—महाराज ! श्रीमान् के भ्रम को दूर करने के लिये मैने वस्तु-स्थिति बतला दी है। मे वाचाल नही। मेरा कुल कपट का नाम तक नही जानता। अपनी माँ की भी मुझे याद नही आ रही हे। मेरी बाल्यावस्था मे ही पिताजी भी समुद्र मे डूब चुके हे। आप ही मेरे लिये माता भी हैं, पिता भी तथा राजा भी। यदि मै मर भी जाऊँगा तो एक वृद्ध गुरुजी और एक नववयस्का व्यक्ति ( सौवर्णी ) रोयेंगे और कोई नही। श्रीमान् के चरणो का

प्राणास्त्यक्ष्यामि । किन्तु यथा भवानेव पश्चात् दुःखेन न तप्येत, तथा विचार्य हन्तव्योऽय बाल ।

महाराज —नाहमधिक शुश्रूषे तव व्यर्थप्रलपितम् ।

[ इति कथयित्वा शक्ति सज्जीकृतवान् ]

[ ततो जयपुराधीश्वरेण बहुश सान्त्वितोऽपि, शक्ति मस्थाप्यापि, क्रोधेनास्थिर प्रोक्तवान् ] न त्वादृशाना निकटे जयपुराधीशाना खड्ग शोभते, तत् प्रतियच्छ ।

रघुवीर —[ खड्ग सम्मुखेऽस्थापयत् ] ।

महाराज —दूरतो भव, नाह त्वादृशाना मुखमवलुलोकयिषामि ।

रघुवीर —[ साष्टाङ्ग प्रणम्य निर्गत ] ।

अथ मुहूर्त्तानन्तर किञ्चित् प्रकृतिमापन्ने महाराष्ट्रेश्वरे, महाराज-जयसिंहेन मन्दमुक्तम्—वीर ! एकदा निर्दोष बन्धु वीरेन्द्रसिंह कलङ्कितवानस्मि । स तु वैभव त्यक्त्वा न जाने क्व गत – इत्यद्यापि

---

शुश्रूषे–श्रोतुमिच्छामि ।

अवलुलोकयिषामि–अवलोकयितुमिच्छामि ।

प्रकृतिम्–आवेशविधुरावस्थाम् । आपन्ने–प्राप्ते । कलङ्कितवान्–

---

ध्यान करता हुआ मैं सुखपूर्वक अपने प्राण का परित्याग कर दूगा । किन्तु इस बालक की हत्या आप सोच-विचार कर ही करे, ताकि पीछे आपको इसके लिये पश्चात्ताप न करना पडे ।

महाराज—अब मैं तुम्हारा व्यर्थ का प्रलाप अधिक नही सुनना चाहता ।

[ यह कहकर अपनी 'शक्ति' को शिवाजी ने सुसज्जित कर लिया ]

[ तदनन्तर जयपुर-महाराज द्वारा बहुत प्रकार की सान्त्वना दिये जाने पर भी, शक्ति को रखकर भी, क्रोध से कम्पमान शिवाजी ने कहा— ]

तुम्हारे जैसे नीच के पास जयपुराधीश्वर का खड्ग शोभित नही हो रहा है । अत तुम इनका खड्ग इन्हे लौटा दो ।

रघुवीर—[ खड्ग को सामने रख दिया ] ।

महाराज—दूर हटो, तुम्हारे जैसे नीच का मैं मुह तक देखना नही चाहता ।

रघुवीर—[ साष्टाङ्ग प्रणाम कर वहां से चल पडा ] ।

स्मार स्मार खिद्ये। तत कथयामि, दण्डे त्वरा न विधेया। मन्ये, अस्मिन् विषये वहु अवशिष्यते। तद् अङ्गीकरोपि चेत् प्रातरहमपि वास्तविक-विद्रोहिण निश्चेतु यते।

महाराज —नात्र मम विमति ।

जयसिह —कथ्यता प्रात सर्वेऽप्येते मच्छिविरमायान्त्विति।

महाराज —क्रूरसिह ! प्रिय माल्यश्रीक ! भवन्त सर्वेऽपि प्रधान-वीरा प्रातरेव महाराज-जयपुराधीश्वरस्य शिविर गच्छन्तु, पृष्टाश्च सत्य वदन्तु।

---

मिथ्याक्षेपैराक्षिप्नवान्। वैभवम्—सम्पत्तिम्। त्वरा—शैघ्रयम्।

विमति –विभिन्ना मति । विपरीतो विचार इति यावत्।

एवम्भूता क्षिप्रकारिताऽपि शिवराजपतनस्य कारणेष्वेकमित्यवधारणीयम्। या शैली पश्चादाश्रितैतद्विपयविवेचनाय जयसिंहेन स्वीकृता, सैव राजनीतिकयोग्यतापूर्णेति को नाङ्गीकुर्यात्? स्वाच्छत्रुपक्षीयण रहोमत्तखानेन

---

तदनन्तर थोडी देर के वाद जव महाराष्ट्रराज शान्त हो गये तब जय-पुरनरेश ने धीरे से उनसे कहा—वीर ! एक बार निर्दोप वन्धु वीरेन्द्रसिह को मैंने भी कलङ्कित किया है। वह सम्पत्ति को छोडकर कहाँ चला गया—इसका पता भी नही है। आज वारम्वार उसकी याद कर खिन्न हो रहा हू। इसलिए मै कहता हू—दण्ड देने मे शीघ्रता नही करनी चाहिये। मै समझना हू कि इस विपय मे अभी बहुत कुछ कर्त्तव्य अवशिष्ट ही है। अत यदि आप चाहे तो सुवह मैं भी वास्तविक विद्रोही के निश्चय के लिये प्रयास करूँ।

महाराज—इसमे मेरा वैमत्य नही है।

जयसिह—अच्छा तो इन सवसे आप कह दें कि ये सब कल प्रात काल मेरे शिविर मे आ जायँ।

महाराज—क्रूरसिह ! प्रिय माल्यश्रीक ! आप सब प्रधान वीर कल प्रात काल होते ही महाराज जयपुराधीश के शिविर मे चले जायँ और यदि आप से वे कुछ पूछें तो आप लोग सत्य-सत्य वतलायें।

जयसिंह —सादिन सत्वर प्रेष्या, रहोमत्तखानमपि सत्वर परावर्त्य अत्रैव स्थापयेयु, रघुवीर चाऽऽनयेयु ।

महाराज —माल्य ! तथा विधेहि ।

माल्यश्रीकस्तथा विधातु सादिनो धावितवान् । साय समयमासन्नमवगत्य च सर्वे समुत्तस्थु ।

इति नवमो निश्वास ।

---

कस्यचन सेनापतेर्व्यर्थहिंसायै कथित भवेदित्यपि नावधारित तदानी यत्तदपि स्वराविलसितमित्यास्ता तावत् ।

इति श्रीशिवराजविजयवैजयन्त्या नवमनिश्वासविवरणम् ।

---

जयसिंह—घुडसवारो को शीघ्र भेजवाये ताकि वे रहमत खाँ को भी शीघ्रता से लौटाकर यही रक्खे और रघुवीर को भी लौटा ले आवें ।

महाराज—माल्य ! वैसा ही करो ।

वैसा करने के लिये माल्यश्रीक ने घुडसवारो को दौडाया एवम् सन्ध्या समय जानकर सब सभास्थान से उठ गये ।

शिवराजविजय का नवाँ निश्वास समाप्त ।

॥ श्री ॥

# दशमो निश्वासः

"मानो हि महता धनम् ।"

"गङ्गातीरमपि त्यजन्ति मलिनम्, ते राजहंसा वयम् ।"

——स्फुटकम्

अथ प्रातरेव महाराज-जयसिंहो विसृज्य पर्य्यङ्कम् 'रघुवीरो निर्दोष' इत्येव स्वप्नेषु पश्यन् प्रातर्विधेय-कर्मणो निवृत्य, सभामधिष्ठाय, चिरं निरणैषीत् । तेनाऽऽहूय, "सत्यं वद केन सूचितोऽसि, न ते भयम्, यथा निर्दोषो न भवेद्दण्डितस्तथा विधेहि"——इति पृष्टो रहोमत्तखान उवाच-'महाराज ! अस्त्येक क्रूरसिंहाख्य सेनापति । तस्यैव साहाय्येन शास्तिखानेन पुण्यनगरं गृहीतमासीत् । तेनैव वयमपि सूचिता" ।

---

क्रूरेण क्रूरसिंहेन मिथ्याभिशप्त, कियत क्षणस्य कृते स्वाभाविकत्वरया स्वीकृतवति च शिववीरे, स्वीयं मानं पालयितुं तथा दूरीभूतो रघुवीरसिंहो यथा तदनिच्छयाऽन्वेषितोऽपि न लब्ध इत्युपक्षिपति "मानो हि महता धनम्" इति 'गङ्गातीरमि" ति च ।

विसृज्य—परित्यज्य । पर्य्यङ्कम्—शोभना खट्वाम् । प्रातर्विधेयकर्मण – उप कर्तव्यकार्यात् । निरणैषीत्—निरचैषीत् । आहूय—आकार्य । निर्दोष – निरपराध । विधेहि—कुरु ।

---

"आत्मसम्मान ही महापुरुषो का सर्वस्व है ।"

"हमलोग तो ऐसे राजहंस है जो दूषित हो जाने पर गङ्गा-तट का भी परित्याग कर देते है ।"

——मुक्तक

इसके बाद "रघुवीर निर्दोष है" इस प्रकार के स्वप्नदर्शन के पश्चात् प्रात काल मे अपनी शय्या से उठकर महाराज जयसिंह अपने प्रात कृत्य न निवृत्त हुये ओर तदनन्तर सभा मे बैठकर चिरकाल तक उन्होने विचार-विमश

ततः कोपकषायितेन महाराजेन क्रूरमानाययितु सादिनः प्रेषिताः। स तु रात्रावेव गृह त्यक्त्वा क्वापि पलायित इत्याकलय्य निश्चितस्तस्य दोष इति निरधारि। ततो रघुवीरमानाययितु हयारोहान् विसृज्य सवादमाप्तवान्—यत् सभातो निर्वासितो रघुवीर आवास गत्वा गुरु गणेशशास्त्रिण साष्टाङ्ग प्रणम्य, "अद्य निर्दोषोऽपि प्रभुणा विद्रोहीति कोप-विषयीकृतोऽस्मि। धिङ् मे दुरदृष्टम्" इति मुक्तकण्ठ रुदित्वा, वृद्ध गणेशशास्त्रिणञ्च रोदयन्, गृहान्निर्गतो न परावर्तते—इति।

कोपकषायितेन–रोषताम्रेण। आनाययितुम्–प्रापयितुम्। पलायित-इत्याकलय्य, न केवल रहोमत्तखानकथनेनैव दोषो निर्धारितो राजनीतिकज्ञानवता जयसिंहेन, अपि तु पलायनरूपात्प्रत्यक्षाद्धेतोरिति बोधयति। आवासम्–निवासभूमिम्। दुरदृष्टम्–दुर्भाग्यम्। मुक्तकण्ठम्–विदारितगलम्। सुस्पष्टमिति यावत्। रोदयन्–क्रन्दयन्।

किया। उन्होने रहमत खॉ को बुलाकर पूछा—"सच-सच बताओ—तुझे किसने सूचना दी है? तुम डरो मत! तुम ऐसा करो जिससे कोई निर्दोष व्यक्ति दण्डित न हो।" इस प्रश्नपर रहमत खॉ ने उत्तर दिया—"महाराज! एक क्रूरसिह नाम का सेनापति है। उसी की सहायता से शाईस्ता खॉ ने पूना को घेर लिया था। हम लोगो को उसी से सूचना मिली थी।"

इसके बाद क्रोध से लाल-लाल ऑखो वाले महाराज ने क्रूरसिह को बुलाने के लिये घुडसवारो को दौडाया। परन्तु जब महाराज को यह खबर मिली कि क्रूरसिह रात मे ही अपना घर छोडकर कही भग गया तो उन्होने यह निश्चय कर लिया कि अपराध क्रूरसिह का ही था। फिर रघुवीर को अपने पास लाने के लिए जब उन्होने घुडसवारो को भेजा तो लौट कर घुडसवारो ने उन्हे सूचना दी कि सभा ने बाहर निकाल दिये जाने पर रघुवीर सिह अपने घर गये और अपने गुरुदेव श्रीगणेश शास्त्री जी को प्रणाम करते हुये उनसे "आज निर्दोष होने पर भी मुझे विद्रोही समझ कर महाराज मेरे ऊपर बिगड गये, मेरे इस दौर्भाग्य को धिक्कार है"—ऐसा कह कर जोरो से रो पडे और अपने पीछे बूढे गणेश शास्त्री जी को भी रुलाते हुये जो घर से निकले उसके बाद अब लौटे नही हैं।

इत्याकलय्य सर्वे सम यावत् खिद्यते महाराजस्तावदकस्मात् प्रविवेश दुःखेन कोपेन च विह्वलो गणेशशास्त्री। उक्तवाश्च—

"महाराज! महाराज! अपि भवादृशाना सम्मुखे उचितोऽयमन्याय-प्रचार ? कि रघुवीर-सदृशानि कुलीनानामपत्यानि विद्रोहमाचरन्ति? "अहह! हा! हा! हा! मिथ्यैव कलङ्कितोऽस्मि"-इति भूमौ विलुठ्य रुदतो बालस्य मूर्ति खचितेव मद्धृदये। महाकुलस्य मानधनो बालो न जाने क्व गत ? न च जाने असौ मान-हानि-खिन्नो व्याघ्र-वदने वा वाहिनी-प्रवाहे वा पतिष्यति, गरल भक्षयिष्यति, तपोभिर्वा शरीर जर्जरयिष्यति। हन्त! हतोऽस्मि! को मा वृद्ध 'तात तातेति' मधुर-भाषण-पुरस्सर सेविष्यते।"

---

अन्यायप्रचार –अनीतिव्यवहार। कुलीनानाम्–सत्कुलजानाम्।

खचिता–आलिखिता। मानधन –अभिमानवित्त। वाहिनी-प्रवाहे–तरङ्गिणी-स्रोतसि। गरलम्–विषम्।

---

उसकी बात सुन कर अपने सारे सभासदो के साथ महाराज के चिन्ता-मग्न होते ही उधर से दुःख तथा क्रोध से विह्वल गणेश शास्त्रीजी भी एकाएक वहाँ आ पहुँचे। आते ही शास्त्रीजी ने कहना शुरू किया —

महाराज! महाराज! क्या आप जैसे महान् व्यक्ति के समक्ष भी अन्याय का इतना-प्रचार उचित है? क्या रघुवीर जैसे सत्कुल-प्रसूत लोग भी विद्रोह कर सकते है? "हाय! हाय! मै मिथ्या-कलङ्क का भागी बन गया।" यह कह कर जमीन पर गिर कर रोने वाले उस बालक ( रघुवीर ) की प्रतिमा मेरे मन मे गड-सी गई है। पता नही, वह सत्कुलोत्पन्न एवम् सम्मान को ही अपना सर्वस्व समझने वाला बालक कहाँ चला गया। यह भी कहना कठिन है कि आत्मापमान से अत्यन्त खिन्न वह बालक बाघ के मुँह मे जा पहुँचेगा, या नदी के प्रवाह मे अपने शरीर को बहा डालेगा, या विष खाकर प्राणोत्सर्ग कर देगा, या कठिन तपस्या से ही अपने कोमल शरीर को जर्जर कर डालेगा। हाय! अब मर चुका। अब कौन सा व्यक्ति मुझे अपने मधुर बातचीत के साथ "तात! तात!" कहेगा और मुझ वृद्ध की सेव

तदाकर्ण्य गणेशशास्त्रिणा सहैव सर्वेऽपि बाष्प-धाराभि कपालावस्नपयन् ।

ततो रघुवीरान्वेषणाय बहूनश्वारोहान् विसृज्य गणेशशास्त्रिण पुनरुवाच महाराज —वृद्ध ! ह्यो रघुवीरोऽपि कुल-गौरवमशसत, भवानपि चाऽऽम्रेडच तत्कुलकथा सस्मरति । तस्य वीरताव्यवहार, गम्भीर भाषणम्, औदार्य-पूरित हृदयम्, तेजस्विनी आकृतिश्च कुलमेव परिचाययन्ति । किन्तु विशिष्य विज्ञातुमेतस्य भवतश्च वृत्तान्त चपल मे चेत । मन्ये भवन्तमपि कदाचन दृष्टवानस्मि, भवतो भाषण-भङ्गी चानुकरोत्यस्मद्देशीयाना परिपाटीम् । तद्विशकलय्य प्रोच्यताम्, कुत्रत्यो भवान् ! किमितिहासश्च रघुवीर ?—इति ।

---

अशसत–अकथयत् । आम्रेडच–द्विस्त्रिरुद्घुष्य । वीरताव्यवहारम्–शूरताकर्त्तव्यम् । औदार्यपूरितम्–उदारताभरितम् । तेजस्विनी–प्रतापमयी । आकृति –रूपम् । परिचाययन्ति–बोधयन्ति । चपलम्–जिज्ञासाचञ्चलम् । भाषण-भङ्गी–कथनशैली । परिपाटीम्–शैलीम् । क इतिहासो यस्य स किमितिहास –किमितिवृत्त ।

---

शास्त्री जी का करुण क्रन्दन सुनते ही सब के मुँह आँसुओ से धुलने लग गये ।

तत्पश्चात् रघुवीर को ढूढने के लिये अनेक घुडसवारो को भेजकर महाराज ने शास्त्री जी से कहा—वृद्ध शास्त्रीजी ! कल रघुवीर ने स्वयम् अपने कुल का गुण-गान किया था और आप भी उसकी उच्च कुल स्थिति का वर्णन कर रहे है । इतना ही नही, उसके वीरतापूर्ण व्यवहार से, गम्भीरतापूर्ण वचनो से उदारताभरे हृदय से, तथा देदीप्यमान आकृति से भी उसके उच्च कुल का ही परिचय मिलता है । किन्तु उसके तथा आपके पूरे वृत्तान्त को स्पष्टरूप मे समझने के लिये मेरे मन मे उत्सुकता बनी हुई है । मैंने आपको भी प्रायश पहले कभी देखा है और आपकी भाषणशैली भी मेरे देश के रहनेवालो जैसी लगती है । अत आप मुझे विस्तारपूर्वक अपना परिचय दे और रघुवीर का भी सारा इतिहास बतलाये ।

तदाकर्ण्य वृद्ध उवाच—"महाराज ! इतिहासममु श्रुत्वाऽधिक खेदमावक्ष्यति भवान्, तदल शोक-समुद्र मन्थनै"। तत पुन पुनराग्रहेण पृच्छमानो वृद्ध शृण्वत्सु माल्यश्रीकगौरसिंहादिषु समवादीत्—देव ! कि न स्मर्यते भवता जितवार-भूस्वामी भवद्बन्धु ? यो भवता विनैवापराधमवहेलित सर्वस्व त्यक्त्वा, राजपुत्र-देशमेव त्यक्तवान्।

जयसिह—कथ न स्मर्यते ? आजन्म स्मरिष्यामि, पश्चात्तापैश्च हृदय धक्ष्यामि। [ पटान्तेन वाष्प परिमृजन् ] तत।

गणेशशास्त्री—तस्यैवाह पुरोहितोऽस्मि, तत्रैव मा भवान् बहुशोऽद्राक्षीत्।

जयसिह—आ ! स भवान् ! [ इत्युत्थाय प्रणनाम ]

---

आवक्ष्यति–प्राप्स्यति। शोकसमुद्रस्य–खेदपारावारस्य मन्थनै–आलोडनै। जितवारनाम्नो ग्रामस्य भूस्वामी–ग्रामपति।

अवहेलित–तिरस्कृत। सर्वस्वम्–सर्व धनम्।

पश्चात्तापै–अनुतापै। धक्ष्यामि–ज्वलयिष्यामि।

---

महाराज की वाणी सुनकर वृद्ध शास्त्रीजी ने उत्तर दिया—महाराज ! हम लोगो के इतिहास को सुनकर आप बहुत खिन्न हो उठेंगे। अत इस शोकसागर का मथन करना व्यर्थ है। परन्तु बारम्बार महाराज द्वारा आग्रहपूर्वक पूछे जाने पर शास्त्रीजी सुनने के लिये दत्तचित्त माल्यश्रीक एवम् गौरसिंह आदि के बीच बैठे हुये महाराज से कहने लगे—महाराज ! क्या आप जितवार नामक गाँव के अधिपति अपने मित्र का स्मरण नही कर पा रहे है, जिन्होने निरपराध होने पर भी आपके द्वारा अपमानित होकर अपनी सारी सम्पत्तियो के साथ-साथ आपके देश को भी छोड दिया था।

जयसिह—स्मरण कैसे नही करूँ ? मै तो जीवनपर्यन्त उनका स्मरण करता रहूँगा और पश्चात्ताप से मेरा हृदय जलता रहेगा। [ तौलिये से आँसू पोछते हुये ] अच्छा, इसके बाद ...।

गणेशशास्त्री—मैं उन्ही का पुरोहित हूँ। आपने मुझे वही कई बार देखा हैं।

जयसिह—अच्छा, आप उनके पुरोहित हैं। [ इतना कहते हुये उठकर महाराज ने उन्हे प्रणाम किया ]

गणेशशास्त्री—[ आशिष उक्त्वा ] तेनैव महाहमपि प्रचलित ।

जयसिह—कि तेनैव सह ? वीरेन्द्रेणैव सह ? कि वीरेन्द्रसिहोऽधुनाऽपि भवदाश्रमे सहास्ति ? अपि तमालिङ्ग्य चिरताप-व्यथा पर्यवसाययिष्यामि ?

गणेशशास्त्री—महाराज ! प्रभुणा वीरेन्द्रेणैव सह निर्यातोऽस्मि । वय सर्वेऽपि प्रथम द्वारकाधीश द्रष्टु प्रचलिता । ततो महता पोतेन मुम्बापुरी निवर्तमाना अकस्माद् झञ्झावाताऽऽघातात् पोतपातमन्वभवाम । तत सपदि मया वीरेन्द्रकुमारो रामसिह उत्तरीयवाससा स्कन्धे बद्ध । दैवाच्चाऽऽवाभ्यामुभाभ्या पुरोहितयजमानाभ्या कार्पास-भार-द्वय लब्धम, तदवलम्ब्य यावत पुरोऽवलोक्य सायात्रिक-क्रन्दन-

भवदाश्रमे–भवत्कुटीरे । चिरतापव्यथाम्–दीर्घविरहपीडाम् । पर्यवसाययिष्यामि–परित समापयिष्यामि ।

निर्यात –निष्क्रान्त । महता, पोतेन–जलयानेन । मुम्बापुरीम्–मोहमयीम् 'बाबे' । झञ्झावाताघातात्–सवृष्टिकमहावायुनाडनात् । पोतपातम्–जलयानब्रुडनम् । सायात्रिकाणाम्–पोतवणिजाम् । सयात्रा–समुदितयात्रा द्वीपान्तरयात्रा वा प्रयोजनमस्येति प्रयोजने ठक् । क्रन्दनश्रवणेन–रोदनश्रुत्या,

गणेशशास्त्री—[ आशीर्वाद देते हुये ] उन्ही के साथ मै भी वहाँ चल पडा था ।

जयसिह—क्या उन्ही के साथ ? उन्ही वीरेन्द्रसिह के साथ ! क्या वीरेन्द्रसिह आज भी आपके साथ आपके आश्रम मे रह रहे है ? क्या मैं उनको आज गले लगाकर अपने पुराने पश्चात्ताप की व्यथा को समाप्त कर सकूंगा ?

गणेशशास्त्री—जी हाँ, मैं तो ग्रामाधीश वीरेन्द्रसिह के साथ ही वहाँ से चल पडा था । सबसे पहले तो हम लोग द्वारकाधीश को ही देखने चले गये थे । बाद मे जब वहाँ से हम लोग एक विशाल जलयान से बम्बई को लौट रहे थे उस समय एकाएक इतने जोरो से वर्षा तथा आँधी आयी कि हम लोगो का जलयान डूबने लग गया । तब झटके से मैने अपने द्वितीय वस्त्र से वीरेन्द्रसिह के सुपुत्र रामसिह को अपने कन्धे पर बाँध लिया । सौभाग्यवश हम दोनो पुरोहित-यजमान को समुद्र मे तैरते हुये रूई के दो भार (गाँठ) मिल गये और

श्रवण–सञ्जात रोमोत्कम्पमन्वभवाव, तावन्मन्दर-गण्डशैल इव पारावारतलमगात् पोत ।

क्षण तरङ्गैरान्दोल्यमानो वीरेन्द्रसिहो दरीदृश्यमानोऽपि, ऊर्मि-राशिभिर्न जाने कुतो नीत । अहञ्च रामसिह-सहितो मूर्छितप्राय समस्ता रात्रि वीचि–प्रचयैर्दोदुल्यमान, अरुणोदयसमये समपश्यम्—यत् केचन सायात्रिका आवा स्वपोते उत्थाप्य, पयोधिपय क्षार-क्षरितप्राया त्वच तैलैर्मर्दयन्तीति। अथ कालेनोल्लाघौ आवामित पुण्यनगरमायातो। रामसिहो दुरवस्थासमये स्वनामापि ख्यापयितु लज्जमानो रघुवीरनाम्नाऽऽत्मान परिचाययन् महाराष्ट्र-राजस्य चरेषु प्राप्तजीविक सवृत्त । इत परमवगत एव वृत्तान्त एतस्य भवताम्। हा ! रामसिहो मा वार्द्धक्ये विहाय न जाने क्व

सञ्जातम्–सम्भूतम् । रोमोत्कम्पम्–पुलकम् । मन्दस्य–तन्नाम्नाऽचलस्य । गण्डशैल इव–पर्वतच्युतस्थूलोपल इव । पारावारतलम्–समुद्रगर्भम् । अगात्–अगमत् ।

आन्दोल्यमान –हिल्लोल्यमान । ऊर्म्मिराशिभि –लहरिततिभि । नीत –प्रापित । वीचिप्रचयै –तरङ्गभङ्गै । दोदुल्यमान –उत्क्षिप्यमाण । पयोधिपयस –अम्भोधिवारिण । क्षारेण–लवणभागेन । क्षरितप्रायाम्–जर्जरिताम् । उल्लाघौ–नीरोगौ। दुरवस्था-समये–अशोभनकाले। प्राप्त-जीविक –लब्धभृति । वार्द्धक्ये–वृद्धावस्थायाम् ।

उन दोनो का सहारा लेकर हम लोग जलयान की ओर देखते समय समुद्र-यात्रियो के करुणक्रन्दन को सुनकर रोमाञ्च का अनुभव कर रहे थे कि इतने मे ही वह जलयान मन्दराचल की चोटी मे गिरे हुये बडे पत्थर के टुकडे की तरह समुद्र मे डूब गया ।

यद्यपि थोडी देर तक समुद्र की तरङ्गो का आघात खाते हुये वीरेन्द्रसिह भी दिखलाई पडे तथापि उन तरङ्गो ने उन्हे कहाँ ले जा छोडा—इसका पता नही। इधर रामसिह के साथ सारी रात उन तरङ्गो के बीच गोता खाता हुआ मृतप्राय मैने अरुणोदय के समय देखा कि कुछ यात्री लोग हम दोनो को अपनी नाव मे रख कर समुद्र के खारे जल मे चिरकाल तक तैरने के कारण रूखी पडी हुई हम लोगो की त्वचा पर तेल-मालिश कर रहे थे ।

गत ? [ तत क्षण सर्वेऽपि मचिन्ना ममवर्तन्त। गौरसिहादयोऽपि च परस्परमवलोक्य, किमपि व्याजिहीर्षव इव महाराज विवक्षुमाकलय्य, पुनस्तत एव दत्तकर्णा समतिष्ठन्त ]

जयसिह —[सजलनयन समुच्छ्वस्य ] शास्त्रिन्! रामसिहो जीवति। मत्प्रेपिता सादिनस्तमन्विष्य सपद्यानेष्यन्तीति विशिष्य सम्भवोभवीति। अन्यथाऽपि स नाऽऽत्मान व्यापादयिष्यति। यतो नास्मत्कुले जाता मूढयोषित इवाऽऽत्मान घ्नन्ति। सोपि निश्चयेन गूढपौरुष प्रदर्श्य समये पुनरात्मान परिचाययिष्यतीति विश्वसिति मे हृदयम्।

---

व्याजिहीर्षव –व्याहर्तुमिच्छव , आकलय्य–विज्ञाय। तत एव–तत्रैव। दत्तकर्णा –अवहितश्रोत्रा।

विशिष्य–विशेषत , सम्भवोभवीति–अतितरा सम्भवति। अन्यथापि–अप्राप्तावपि। व्यापादयिष्यति–मारयिष्यति। मन्ष्यतीति यावत्। मूढयोषित इव–मूर्खस्त्रिय इव। आत्मान घ्नन्ति–आत्महत्या कुर्वन्ति। गूढपौरुषम्–गुप्त पुरुषकारम्। विश्वसिति–विस्रम्भते।

---

कुछ समय के बाद जब हम लोग स्वस्थ हो गये तब पूना आ गया। अपनी दुरवस्था की अवधि मे अपने सच्चे नाम को बतलाने मे लज्जा का अनुभव करते हुये रामसिह भी अपने रघुवीर नाम का एक साधारण व्यक्ति बतलाकर महाराष्ट्रराज शिवाजी के यहाँ दूत का काम करते हुये अपना जीवन बिताने लग गया। उसके बाद का रघुवीर का इतिहास तो आपको ज्ञात ही है। हाय! पता नही—इस वृद्धावस्था मे मुझे छोडकर रामसिह कहाँ चला गया! [ इन बातो को सुनते ही सब चिन्तित हो पडे। गौरसिह आदि एक दूसरे की ओर देखकर कुछ बोलने को ही थे कि महाराज को बोलने की मुद्रा मे देखकर उधर ही ध्यानस्थ हो गये ]

जयसिह—[ आँखो मे आँसू और लम्बी साँसे भर कर ] शास्त्रीजी! यदि रामसिह जीवित है तो इस बात की पूरी आशा है कि मेरे भेजे हुये घुड-सवार उसे खोजकर शीघ्र ही यहाँ ले आयेंगे। यदि ऐसा न भी हुआ तब भी वह आत्महत्या नही करेगा, क्योंकि हमारे वशज किसी भी परिस्थिति मे मूर्ख स्त्रियो की तरह आत्महत्या नही करते। मेरे मन मे पूरा भरोसा है कि अव-

गणेशशास्त्री—महाराज ! तथास्तु, चिरञ्जीवतु कुमार-रामसिंह, स एव मेऽवलम्ब । न जाने तत्पिता प्रभुर्नरेन्द्रो नक्रैर्भक्षितो वा, तरङ्गैरेव कथाऽवशेषकृतो वा, तट प्राप्यापि कृतान्तेन वीक्षितो वा, क्वापि पुत्रशोकाकुलो जीवति वेति ।

गौरसिंह—शास्त्रिन् ! महाराज ! जीवति वीरेन्द्रसिंहो वीरवर । नेदीयस्येव ब्रह्मचारि-कुटीरे जटिल-वेषेण वसति । स्वपुत्र रामसिंह-मेव प्राप्तु देवमाराधयति । वयमपि चिर कुमार-रामसिंहममार्गयाम, परन्तु रघुवीर एवायमिति परिचयो न लब्ध । हा दैव ! विचित्रा ते घटना ! यदर्थ तातो देवशर्म्मा वयञ्च चिराय रुदिम, स एव कण्ठगतो मणिरिव न ज्ञात ।

---

अवलम्ब –आधारस्तम्भ । नक्रै –मकरै । यादोभिरिति यावत् । कथा-वशेषीकृत –प्रणाशित । कृतान्तेन–यमेन । वीक्षित –दृष्ट ।

नेदीयसि–निकटस्थे । जटिलवेषेण–साधुनेपथ्येन । आराधयति–सेवते । अमार्गयाम–अन्वेषयाम । रुदिम –क्रन्दाम ।

---

सर आने पर रामसिंह अपने लोकोत्तर पौरुष का प्रदर्शन करके अपने को स्वयम् प्रकट कर देगा ।

गणेशशास्त्री—महाराज ! आपकी वाणी सत्य होवे । राजकुमार राम-सिंह दीर्घजीवी हो । मेरा तो एकमात्र वही सहारा है । किन्तु मुझे इस बात का पता नही लग सका कि रामसिंह के पिता राजा वीरेन्द्रसिंह ग्राहो के शिकार बन गये या तरङ्गो के आघात से ही मर गये या किनारे लगने के बाद ही उन पर यमराज की क्रूर दृष्टि आ पडी या आज भी अपने पुत्र के वियोग मे विह्वल होते हुये कही जिन्दे ही हैं !

गौरसिंह—शास्त्रीजी ! महाराज ! वीरो मे अग्रगण्य राजा वीरेन्द्रसिंह आज भी जीवित ही हैं । पास की ब्रह्मचारी की कुटिया मे ही ब्रह्मचारी के वेष मे वे रह रहे है । अपने प्रिय पुत्र रामसिंह को पाने के लिए ही ईश्वर की आराधना कर रहे है । हम लोग भी चिरकाल तक रामसिंह को ढूढते रहे, परन्तु इस बात की जानकारी नही मिल पाई थी कि रघुवीर ही राम-सिंह है । हाय विधाता ! तुम्हारी लीला भी अजीब है । जिसके लिए उसके

तत सर्वे चिर वहुविध वीरेन्द्रादि-विषये आलेपु । परत सर्वे सह जयपुर-पुरन्दर स्वय कुटीर गत्वा ब्रह्मचारि-वेष वीरेन्द्रमालिलिङ्ग । उक्तवाश्च यद् मयि क्षमा विधाय द्विगुण राज्यमङ्गीकृत्य सनाथ्यता राजपुत्रदेश —इति । सोऽवोचत्—महाराज ! न भवतो दोष ,भवत्येव भाव्यम् । अहन्तु कुमार-रामसिहस्य मुख दृष्ट्वा काशी गत्वा वयो नि शेषयिष्यामि । महाराजेन रामसिह एवान्विष्यताम्, तस्मै एव राज्य दीयताम् । अन्धोऽह यत् प्रत्यह पश्यन्नपि नाज्ञासिष-यद् रघुवीरो मे रामसिह —इति ।

अथ गणेशशास्त्रिणाऽपि वीरेन्द्र समालिङ्गित । परतश्च खेदमया बहव आलापा अभूवन ।

---

आलेपु—आलाप चक्रु । ब्रह्मचारिवेषम्—वर्णिलिङ्गिनम् । सनाथ्यताम्—स्वीक्रियताम् । भाव्यम्—भवितव्यम् । नि शेषयिष्यामि—समापयिष्यामि । नाज्ञासिषम्—नावेदिषम् ।

---

प्रिय पिता, देवशर्मा तथा हम लोग भी चिरकाल से रो रहे है, वह गले मे लटके मणि की तरह पास मे रह कर भी पहचान मे न आ सका ।

उसके पश्चात् सबो ने चिरकाल तक वीरेन्द्रसिह आदि के प्रसङ्ग मे आलाप-विलाप किये । बाद मे सवा के साथ ही जयपुराधीश ने स्वयम् उस कुटिया मे जाकर ब्रह्मचारी के वेष मे वर्त्तमान वीरेन्द्रसिह को गले लगा लिया और उनसे कहा भी—मेरे अपराधो को क्षमा कर अब आप दूने राज्य को स्वीकार करे और राजस्थान को अपनी उपस्थिति से सनाथ करे ।

वीरेन्द्रसिह ने उत्तर दिया—महाराज ! इसमे आपका कौन सा अपराध है ? भवितव्यता टलती नही । किन्तु अब मै रामसिह का मुख देखकर काशी मे ही अपना जीवन बिताऊँगा । अत अब श्रीमान् रामसिह की ही खोज करे और उसी को यह राज्य दें । हाय ! मै कितना बडा अन्धा हो गया कि प्रतिदिन देखने के बावजूद भी यह नही समझ सका कि वह रघुवीर तो मेरा ही बेटा रामसिह था ।

इसके बाद गणेश शास्त्री ने भी वीरेन्द्रसिह का आलिङ्गन किया । तत्पश्चात् अनेक प्रकार के करुणापूर्ण वार्तालाप हुए ।

गणेशशास्त्री—महाराज ! तथास्तु, चिरञ्जीवतु कुमार-रामसिंह, स एव मेऽवलम्ब । न जाने तत्पिता प्रभुर्नरेन्द्रो नक्रैर्भक्षितो वा, तरङ्गैरेव कथाऽवशेषकृतो वा, तट प्राप्यापि कृतान्तेन वीक्षितो वा, क्वापि पुत्रशोकाकुलो जीवति वेति ।

गौरसिंह—शास्त्रिन् ! महाराज ! जीवति वीरेन्द्रसिंहो वीरवर । नेदीयस्येव ब्रह्मचारि-कुटीरे जटिल-वेषेण वसति । स्वपुत्र रामसिंह-मेव प्राप्तु देवमाराधयति । वयमपि चिर कुमार-रामसिंहममार्गयाम, परन्तु रघुवीर एवायमिति परिचयो न लब्ध । हा दैव ! विचित्रा ते घटना ! यदर्थं तातो देवशर्म्मा वयञ्च चिराय रुदिम, स एव कण्ठगतो मणिरिव न ज्ञात ।

---

अवलम्ब—आधारस्तम्भ । नक्रै—मकरै । यादोभिरिति यावत् । कथा-वशेषीकृत—प्रणाशित । कृतान्तेन—यमेन । वीक्षित—दृष्ट ।

नेदीयसि—निकटस्थे । जटिलवेषेण—साधुनेपथ्येन । आराधयति—सेवते । अमार्गयाम—अन्वेषयाम । रुदिम—क्रन्दाम ।

---

सर आने पर रामसिंह अपने लोकोत्तर पौरुष का प्रदर्शन करके अपने को स्वयम् प्रकट कर देगा ।

गणेशशास्त्री—महाराज ! आपकी वाणी सत्य होवे । राजकुमार राम-सिंह दीर्घजीवी हो । मेरा तो एकमात्र वही सहारा है । किन्तु मुझे इस बात का पता नही लग सका कि रामसिंह के पिता राजा वीरेन्द्रसिंह ग्राहो के शिकार बन गये या तरङ्गो के आघात से ही मर गये या किनारे लगने के बाद ही उन पर यमराज की क्रूर दृष्टि आ पडी या आज भी अपने पुत्र के वियोग मे विह्वल होते हुये कही जिन्दे ही है ।

गौरसिंह—शास्त्रीजी ! महाराज ! वीरो मे अग्रगण्य राजा वीरेन्द्रसिंह आज भी जीवित ही है । पास की ब्रह्मचारी की कुटिया मे ही ब्रह्मचारी के वेष मे वे रह रहे है । अपने प्रिय पुत्र रामसिंह को पाने के लिए ही ईश्वर की आराधना कर रहे है । हम लोग भी चिरकाल तक रामसिंह को ढूंढते रहे, परन्तु इस बात की जानकारी नही मिल पाई थी कि रघुवीर ही राम-सिंह है । हाय विधाता ! तुम्हारी लीला भी अजीब है । जिसके लिए उसके

तत सर्वे चिर वहुविध वीरेन्द्रादि–विपये आलेपु । परत सर्वे सह जयपुर–पुरन्दर स्वय कुटीर गत्वा ब्रह्मचारि-वेप वीरेन्द्रमालिलिङ्ग । उक्तवाश्च यद् मयि क्षमा विधाय द्विगुण राज्यमङ्गीकृत्य सनाथ्यता राजपुत्रदेश —इति । सोऽवोचत्— महाराज ! न भवतो दोप ,भवत्येव भाव्यम् । अहन्तु कुमार-रामसिहस्य मुख दृष्ट्वा काशी गत्वा वयो नि शेषयिष्यामि । महाराजेन रामसिह एवान्विष्यताम्, तस्मै एव राज्य दीयताम् । अन्धोऽह यत् प्रत्यह पश्यन्नपि नाज्ञासिष-यद् रघुवीरो मे रामसिह —इति ।

अथ गणेशशास्त्रिणाऽपि वीरेन्द्र समालिङ्गित । परतश्च खेदमया बहव आलापा अभूवन ।

---

आलेपु–आलाप चक्रु । ब्रह्मचारिवेपम्–वर्णिलिङ्गिनम् । सनाथ्यताम्–स्वीक्रियताम् । भाव्यम्–भवितव्यम् । नि शेपयिष्यामि–समापयिष्यामि । नाज्ञासिषम्–नावेदिपम् ।

---

प्रिय पिता, देवशर्मा तथा हम लोग भी चिरकाल से रो रहे है, वह गले मे लटके मणि की तरह पास मे रह कर भी पहचान मे न आ सका ।

उसके पश्चात् सबो ने चिरकाल तक वीरेन्द्रसिह आदि के प्रसङ्ग मे आलाप-विलाप किये । बाद मे सबो के साथ ही जयपुराधीश ने स्वयम् उस कुटिया मे जाकर ब्रह्मचारी के वेष मे वर्तमान वीरेन्द्रसिह को गले लगा लिया और उनसे कहा भी—मेरे अपराधो को क्षमा कर अव आप दूने राज्य को स्वीकार करे और राजस्थान को अपनी उपस्थिति से सनाथ करे ।

वीरेन्द्रसिह ने उत्तर दिया—महाराज ! इसमे आपका कौन सा अपराध है ? भवितव्यता टलती नही । किन्तु अब मै रामसिह का मुख देखकर काशी मे ही अपना जीवन विताऊँगा । अत अव श्रीमान् रामसिह की ही खोज करे और उसी को यह राज्य दें । हाय ! मै कितना बडा अन्धा हो गया कि प्रतिदिन देखने के बावजूद भी यह नही समझ सका कि वह रघुवीर तो मेरा ही बेटा रामसिह था ।

इसके बाद गणेश शास्त्री ने भी वीरेन्द्रसिह का आलिङ्गन किया । तत्पश्चात् अनेक प्रकार के करुणापूर्ण वार्तालाप हुए ।

परम्परया वृत्तान्तमिम श्रृण्वन्नेव महाराष्ट्रराजोऽपि कुटीरमायातो वाष्पै कपोलौ क्षालयन्, "ममैवाविचार्यकारिताया फलमेतत्"- इत्यसकृदुवाच । तावत्प्रविश्य भृत्येनैकेन कथित "जयतु जयतु जयपुराधीश्वर ! तत्रभवत सम्राज पत्रमादाय दिल्लीत सादिन आयाता, शिविरद्वारि च तिष्ठन्ति । अत्र प्रभव प्रमाणम्" ।

ततो वीरेन्द्र गणेश च बहुश सान्त्वयित्वा सर्वेऽपि समुत्थाय स्वहयानारूढा वायुवेगेन निर्दिष्ट-शिविरमायाता । अन्त प्रविश्य पत्र पठित्वा जयपुरेश्वर सर्वान् विसृष्टवान्, रहसि च महाराष्ट्रे-श्वरेण समालपत् ।

जयसिह —राजन्, पत्रमिद दिल्लीश्वरस्य ।
महाराज —आम् ! अवगच्छामि ।
जयसिह —भवतो मेलनेन प्रसीदति सम्राड् इति प्रकटयति ।

---

अविचार्यकारिताया –अनवधाय करणस्य । असकृत्–अनेकवारम् ।
मेलनेन–सन्धिना ।

---

जन-परम्परा से इस वृत्तान्त को सुनते ही महाराष्ट्रराज शिवाजी भी वहाँ पहुँच गए और आँसुओ से अपने गालो को नहाते हुए वारम्बार कहने लगे—मेरे ही अविवेक-पूर्ण व्यवहार का यह परिणाम है। इतने मे ही एक दूत ने वहाँ आकर कहा— जयपुर-महाराज की जय हो, जय हो। दिल्ली-सम्राट् का एक पत्र लेकर उनके अश्वारोही दूत यहाँ आकर शिविर के दर-वाजे पर खडे ह। ऐसी स्थिति मे श्रीमान् ही प्रमाण है।

उसके बाद वीरेन्द्रसिह तथा गणेश शास्त्री को अनेक तरह की सान्त्वना देकर सब उठ गये और अपने-अपने घोडे पर सवार होकर बहुत तेजी से उस शिविर मे आ पहुँचे जहाँ दिल्ली-सम्राट् के दूत उनकी प्रतीक्षा कर रहे थे। शिविर मे घुसने के बाद जब जयपुर-नरेश ने पत्र पढा तब वे सबको बाहर हटाकर शिवाजी से एकान्त मे बात करने लगे।

जयसिह—महाराज ! यह पत्र दिल्ली-सम्राट् का हे।
महाराज—हाँ, मै जानता हूँ ।

जयसिह—यह पत्र ऐसा बतला रहा है कि आपके मिलने से दिल्ली-सम्राट को बडी प्रसन्नता होगी।

महाराज —प्रसादोऽयमत्रभवत ।

जयसिंह —भवन्त साक्षात्कर्तु महाराजस्य महानभिलाप ।

महाराज —[क्षण तूष्णी स्थित्वा] तत्कि मम्राडित आजिगमिपति ?

जयसिह —नहि नहि । तत्रैव भवन्त सच्चिकीर्षति ।

महाराष्ट्रराज —महाराज ! भवद्वचने सर्वथा विहितविश्वासोऽस्मि, किन्तु न भवति मे प्रत्ययलेशोऽपि यवनेपु । तत् स्वगृहमागत चिरविरोधिन चेन्निगृह्णीयात् !!

जयसिह —मैवम्, मैवम् । अह तस्य पितुस्समीपे चिर युद्धकार्यमकरवम् । तन्मामत्यन्त सम्मानयत्येषोऽपि—इति निश्चिनोमि । अस्मासु मध्यस्थेषु न प्रतीपमाचरिप्यति सम्राट् ।

महाराष्ट्रराज —[ चिर चिन्तयित्वा ] महाराज ! चिर यवनैर्युद्ध-

सच्चिकीर्षति–सत्कर्तुमिच्छति ।

प्रत्ययलेश —मात्रयाऽपि विश्वास ।

प्रतीपम्—विरुद्धम्, शत्रुकृत्यम् ।

महाराज—यह तो उनकी ( या आपकी ) कृपा है ।

जयसिंह—आपको देखने की उत्कट अभिलापा सम्राट् के मन मे है ।

महाराज—[ कुछ देर तक चुप रहने के बाद ] तो क्या सम्राट् यहां आना चाहते है ?

जयसिह—नही-नही । दिल्ली मे ही आपका सत्कार करना चाहते है ।

महाराष्ट्रराज—महाराज ! आपकी वातो पर तो मुझे पूरा विश्वास है ही, परन्तु यवनो के ऊपर तो मै जरा भी विश्वास नही रखता । यदि चिर-विरोधी होने के कारण वे अपने घर मे पहुँचने पर पकड लें तो ……!!

जयसिह—नही-नही ऐसा नही हो सकता । मैंने चिरकाल तक दिल्ली नरेश के पिता के पास युद्ध-कार्य किया है और इसलिये दिल्ली सम्राट् भी मेरा वहुत ही सम्मान किया करते है—यह मै निश्चित रूप मे जानता हूँ । फिर हमारे मध्यस्थ रहते ऐसा प्रतिकूल काम सम्राट् कथमपि नही करेंगे ।

महाराष्ट्रराज—[ वहुत देर तक सोच कर ] महाराज ! मैंने तो वहुत दिनो तक यवनो से लडाई की है । इसलिये सम्राट् मेरी शत्रुता की याद करते

वानस्मि इति स्मरन् मे शत्रुता निश्चित निग्रहीष्यति मा सम्राड्–इति न जाने क कथयतीव मम कर्णे, लिखतीव च हृदये।

जयसिह – शत्रुरपि सहितो मित्र भवति। ततोऽपि भवान् कुशलिन त्यक्तवान् कुमार मायाजिह्मम्, समर्य्यादा यापितवान् कुमारी रसनारीम, सपराक्रम विजितवान् रुद्रमण्डलमहादुर्गम्—इति कि तेन न स्मरिष्यते ?

महाराज —आर्य ! ये काशी-मथुरादि-तीर्थ स्थानानि निरर्थ भ्र श-यन्ति, मन्दिराणि निपातयन्ति, प्रतिमाश्च चूर्णयन्ति, तेषा न सभाव्यते सौजन्य–लेशोऽपि। तत् क्षम्यताम्। युद्धे मर्तुमुपदिशति, न च मेऽन्तरात्माऽङ्गीकरोति दिल्ली–यात्राम्।

---

निग्रहीष्यति–वद्ध्वा कारागारे निधास्यति। कथयतीव–श्रावयतीव।
सहित –सम्मिलित। कुशलिनम्–अक्षतम्। समर्य्यादाम्–धर्मरक्षण-पुरस्कृताम्। यापितवान्–प्रापितवान्। सपराक्रमम्–सवल-प्रदर्शनम्।
निरर्थम्–निष्प्रयोजनम्। चूर्णयन्ति–पेषयन्ति। ध्वसयन्तीति यावत्। उपदिशति–कथयति। अन्तरात्मा–अन्त करणम्। तदुक्तम्महाकविना—"सता हि सन्देहपदेषु वस्तुषु प्रमाणमन्त करणप्रवृत्तय"।

---

हुए मुझे अवश्य ही पकड रखेगे। ऐसी बात कौन-सा व्यक्ति मेरे कानो मे कह-सा रहा है और हृदय मे लिख-सा रहा है। इसका पता नही लग रहा है।

जयसिह—मिलने के पश्चात् शत्रु भी मित्र वन जाता है। और भी आपने जो सकुशल कुमार मुअज्जम को छोड दिया है, इज्जत के साथ रोशन-आरा को लौटा दिया है और पराक्रमपूर्वक रुद्रमण्डल नामक विशाल किला जीत लिया है—इन बातो को क्या वे भूल जायेगे ?

महाराज—आर्य ! जो काशी, मथुरा आदि तीर्थ-स्थानो को बिना किसी प्रयोजन के ही बरवाद करने वाले है। मन्दिरो को व्यर्थ गिरा देने वाले है और देवमूर्तियो को चूर-चूर कर देने वाले है, उनमे सज्जनता की तो गन्ध भी सम्भावित नही है। अत आप क्षमा करे, मेरी अन्तरात्मा मुझे युद्ध मे मर जाने की अनुमति दे रही है, किन्तु दिल्ली जाने की नही।

जयसिह —[ क्षण विचिन्त्य ] अथ मन्यताम्—मया लिखित भवद-स्वीकार श्रुत्वा पुनर्भवता सह युद्धमारभेत ?

महाराज —तद् योत्स्ये !

जयसिह —एतस्मिन् विषये सत्वरता नोचिता । निरीक्ष्यताम्, ससे-नोऽहमेव समीपे निवसामि । यदि भवता सह योद्धुमहमेवाऽऽदिश्ये ?

महाराष्ट्रराज —[ विचिन्त्य ] महाराज ! मम कृपाण स्वदेशीयाना शोणित न पिपासति—इति पूर्वमेवोक्तवानस्मि । पर दिल्लीगमने निग्रहमाशङ्कते मे हृदयम् ।

जयसिह —निग्रहो नाऽऽशङ्कनीय , कुशलेन भवन्त पुनरत्र परावर्तयितुमह प्रतिजानामि । मम पुत्रो रामसिह स्वसहकारेण भवन्त सभाया नेष्यति, सत्करिष्यति च । कुमार-मायाजिह्ममपि पत्र लिखामि । सोऽपि ससम्मान प्रतियापयिष्यति ।

---

सत्वरता-शैघ्रयम् । ससेन -सवाहिनीक । आदिश्ये-समाज्ञप्त स्याम् । निग्रहम्-बन्धनम् । कुशलेन-क्षेमेण । परावर्तयितुम्-महाराष्ट्रप्रदेश प्रापयितुम् । प्रतिजानामि-प्रतिज्ञा करोमि । स्वसहकारेण-निजसहायकत्वेन । सत्करिष्यति-आदरिष्यते । प्रतियापयिष्यति-प्रत्यावर्त्तयिष्यति ।

---

जयसिह—[ क्षण भर सोच कर ] अच्छा तो मै जब आपके दिल्ली न जाने की बात उन्हे लिखूंगा और उसे जान कर वे आपके साथ पुन युद्ध करने को तैयार हो जायेगे तब ?

महाराज—तब युद्ध करूँगा ।

जयसिह—इस विषय मे हठात् निर्णय कर लेना आपके लिये उचित नही होगा । देखिये, मैं तो सेनाओ के साथ आपके यहाँ रहता ही हूँ । यदि सम्राट् मुझे ही आपसे लडने की आज्ञा दे देंगे तो ?

महाराष्ट्रराज—[सोच कर] महाराज ! मेरी तलवार अपने देश के लोगो का खून पीना नही चाहती—यह बात तो मैंने पहले ही आपसे कह दी है । परन्तु दिल्ली जाने से तो मेरा मन पकड लिये जाने की आशङ्का करता ही है ।

जयसिह—पकड लिये जाने की कोई आशङ्का नही है । मैं प्रतिज्ञा करता हूँ कि आप सकुशल दिल्ली से यहाँ लौट आयेंगे । मेरा लडका रामसिह

एव भोजनादि-क्रिया निरवर्तयत्। तत किञ्चिच्छयनेन किञ्चित् पर्य्यट-नादिना च दिनमयापयत्।

अथास्तङ्गते मरीचिमालिनि सर्वतो व्याप्ते महान्धकारे चपलित-चञ्चु-पुटासु प्राचीमवलोकमानासु चकोरीषु शनैरुदगान्निशानाथ ।

समयोऽय शरदन्तस्य ऋतुरेष हिम, शीतल समीर सरति, द्विगुणीकृत वस्त्र रोचते, चिरमरुणा सन्ध्या रात्रीभूता। ईदृशे समये तोरण-दुर्ग समीपे हनुमन्मन्दिरात पूर्वत पुष्पवाटिकायामासन्दीषु उपविष्टास्तिस्रो बाला परस्परमेवमालपन्तिस्म।

प्रथमा—सौवर्णि! समाश्वसिहि समाश्वसिहि, कदाचिदलीको भवेदेष वृत्तान्त। चारुहासिनि! सान्त्वय सान्त्वय सहचरीम्।

---

भ्रमणादिना। अयापयत्–अक्षपयत्।

चपलितचञ्चुपुटासु–चञ्चलितत्रोटिषु। प्राचीम्–ऐन्द्रीम्। अवलोकमानासु–पश्यन्तीषु। शशिन उदयमानस्य निरीक्षणार्थम्। उदगात्–ऊर्ध्वमायात्, उदित इति यावत्।

शरद – अन्त, तस्य। हिम –हेमन्त। शीतल –हिममिश्र। चिरमरुणा-अतिलोहिता। रात्रीभूता–रात्रिताङ्गता। सन्ध्याकाल एव रात्रिभासनमिति यावत्। आसन्दीषु–वेत्रासनिकासु।

अलीक –असत्य। 'अलीक त्वप्रियेऽनृते' इत्यमर।

---

उसके बाद शिवाजी अपने घर लौट आये। उधर जयपुर के महाराज ने भी अपने शिविर मे ही भोजन-पान आदि कर लिया। तत्पश्चात् कुछ देर सो कर और कुछ देर घूम घाम कर उन्होने वह दिन विताया।

उसके बाद सूर्यास्त हो जाने के कारण जब सर्वत्र घना अन्धकार छा जाने से चञ्चल चोचवाली चकोरी पूरब दिशा की ओर देख रही थी उसी समय चन्द्रमा उदित हो उठा।

शरद् ऋतु का अन्त हो चुका था, हेमन्त ऋतु आ चुकी थी, ठण्डी हवा वह रही थी, दुशाले लोगो को प्रिय लग रहे थे और चिरकाल तक लालिमा से सम्पन्न सन्ध्या रात्रि के रूपमे परिवर्तित हो चुकी थी। उस समय सिंहद्वार के पास हनूमान् जी के मन्दिर से पूर्व दिशा मे बसी फूलवारी मे कुर्सियो पर

चारुहासिनी—प्रियसखि ! सत्य वदति विलासिनी । यावन्निश्चित्य न ज्ञायते, यावच्च प्रामाणिकैर्न कथ्यते, तावन्मुधा शोकैरात्मनो ग्लपन व्यर्थम् ।

सौवर्णी—[अञ्चलेन वाष्पमपहृत्य] विलासिनि ! चारुहासिनि ! गत-दिवसमारभ्यैव विमनायमान मे चेत । रात्रौ निद्रामपि न लब्धवती, किञ्चिल्लग्ननिमेषा च भयङ्करान् स्वप्नान् दृष्टवत्यस्मि, मध्याह्ने च भोजनशालाया पृष्ठतो गच्छतोर्न जाने कयोरालापमिम भयानकमश्रौ-षम् । सत्यता चैतस्य विह्वलीभवद् हृदयमेव मे प्रमाणी-करोति । भगिन्यौ ! क्षत्रियकन्याऽहम्, दृढा मे प्रतिज्ञा, तमेव वरयिष्यामि, ब्रह्म-चर्येणैव वा शरीरहतक शोषयिष्यामि ।

---

प्रामाणिकै -सत्यवाग्भि । मुधा—वृथा । व्यर्थम्—अनावश्यकम् ।

विमनायमानम्—उन्मनयमानम्, खिन्नमिति यावत् । किञ्चिल्लग्न-निमेषा—ईषन्मुद्रितनयना । भयङ्करान्—भीतिजनकान् । भोजनशालाया—पाकशालाया । विह्वलीभवत्—खेदमिश्रमौत्सुक्यमाश्रयत् । प्रमाणीकरोति—निश्चाययति। वरयिष्यामि—विवाहयिष्यामि । शरीरहतकम्—व्यर्थीभूत देहम ।

---

बैठी हुई तीन बालिकाएँ आपस मे इस प्रकार वार्त्तालाप कर रही थी ।

पहली बालिका—अरी सौवर्णी ! धीरज बाँधो, धीरज बाँधो । शायद यह बात झूठी हो । अपनी सखी को सान्त्वना दो ।

चारुहासिनी—प्यारी सखी ! विलासिना का कहना ठीक है । जब तक इस बात के विषय मे ठीक-ठीक जानकारी न मिल जाय और जबतक प्रामा-णिक लोग न कहे तबतक इस विषय मे निराधार शोक करके अपने मन को खिन्न बनाना व्यर्थ है ।

सौवर्णी—[ आँचल से आँसू पोछकर ] विलासिनी ! चारुहासिनी ! कल से ही मेरा मन खिन्न हो गया है । रात मे मुझे नीद भी न आई, जब किसी तरह झपकी आई तो मैने बहुत ही भयङ्कर स्वप्न देखे । पता नही, दोपहर की वेला मे भोजनशाला के पीछे से गुजरने वाले किन दो व्यक्तियो की बात-चीत मैने सुनी ? किन्तु मेरा यह व्याकुल हृदय उस बातचीत की सत्यता को प्रमाणित कर रहा है । बहनो ! मैं क्षत्रिय की लडकी हूँ । मेरी तो यही

चारुहासिनी—प्रियसखि ! सिद्धयन्तु ते मनोरथा । तमेव प्राप्स्यसि, तमेव वरयिष्यसि । अञ्जनीसूनुस्साधयतु ते कार्यम् ।

सौवर्णी-[ निश्वस्य ] आ ! किं तादृशा आकृतिविशेषा अपि विद्रुह्यन्ति ? कथमेष मिथ्या-कलङ्क स्थान लब्धवान् ?

विलावासिनी-प्रिये ! यदि मिथ्यैष कलङ्क, तदचिरादेव स्वय महाराष्ट्रराज पश्चात्तापैस्तप्यमान पुनस्तमन्विष्य, अभ्यर्हिततरे पदे नियोक्ष्यति । दैवघटनायामल शोकेन ।

सौवर्णी—शोको हि कलङ्क-विषये ! यद्यह युद्धे तस्य क्षत्रियधर्मेण प्राणत्यागमप्यश्रोष्यम् तत् सुखेन तन्नाम सस्मृत्य स्वयमपि प्राणान् व्यस्रक्ष्यम् । परं कलङ्को न सह्यते क्षत्रियै ।

---

अञ्जनीसूनु –वायुतनयो हनूमान् ।

आकृतिविशेषा –विशिष्टस्वरूपा । स्थानम्–पदम् ।

अचिरात्–शीघ्रम् । तप्यमान –क्लिश्यमान । अभ्यर्हिततरे–अतिपूजनीये । नियोक्ष्यति–नियोजयिष्यति । दैवघटनायाम्–अदृष्टव्यापारे ।

क्षत्रियधर्मेण–"युद्धे चाप्यपलायनम्" इत्येवरूपेण । व्यस्रक्ष्यम्–अत्यक्ष्यम् ।

---

अटल प्रतिज्ञा है कि मैं उसी व्यक्ति से विवाह करूँगी, अन्यथा विवाह किए बिना ही इस निरर्थक शरीर को क्षीण कर डालूँगी (शरीर का अन्त करडालूगी) ।

चारुहासिनी—प्यारी सखी ! तुम्हारी कामनाएँ पूरी हो । तुम्हे वह व्यक्ति मिलेगा ही और तुम उसी के साथ विवाह भी करोगी । अञ्जनीपुत्र हनूमान् जी तुम्हारे कार्य को सम्पन्न करे ।

सौवर्णी—[ लम्बी सासे भरकर ] अहा ! क्या उस तरह के मनोहर आकार वाले भी विद्रोही हो सकते ह ? यह झूठा कलङ्क कैसे फैल गया ?

विलासिनी—प्यारी सखी ! यदि यह कलङ्क झूठा ही है तब तो पश्चात्ताप से व्याकुल महाराष्ट्रराज ही स्वयम् शीघ्रता से उसे ढूंढकर किसी अच्छे पद पर उसकी नियुक्ति कर डालेंगे । इस भाग्यचक्र के लिये शोक करना व्यर्थ है ।

सौवर्णी—भाग्यचक्र के लिये नही, शोक तो मिथ्या कलङ्क के लिये हो रहा है । यदि मैं यह भी सुन लूगी कि उन्होंने युद्ध मे अपने क्षात्रधर्म का पालन करते ही अपने प्राण छोड दिये तो मैं प्रसन्नतापूर्वक उनके नाम का

तावद् दूरत —"अत्तिके! अत्तिके!" इति समश्रावि बालस्येवाऽऽह्वानम्। तत सपदि समुत्थाय चारुहासिनी ततोऽभिमुखीभूय "गोपाल! एते समागच्छाव"–इत्युच्चैरुच्चाय सौवर्णी बहुश सान्त्वयित्वा, "भ्रातृजाये! उत्तिष्ठ, याव"—इति विलासिनीमपि सह नीत्वा मन्दिराऽभिमुख प्रययौ।

सौवर्णी तु व्यामूढोत्थाय, क्षुपात क्षुप, कुटात् कुट प्रति पर्य्यटन्ती, कदली-दल खण्डमाच्छिद्य, तेनैवाऽऽत्मान वीजयन्ती, आत्मानमपि विस्मरन्ती, पूर्वतो बहु दूर निर्गता तडाग-पर्यन्तमायाता, विकचाना भ्रमद्-भ्रमर-झङ्कृताना कैरवाणा शोभामवलोकयन्ती, सोपानैरवतर्तुमारब्ध-

---

समश्रावि–आकर्णितम्। याव –गच्छाव।

व्यामूढेव–विक्षिप्तेव। क्षुपात्–ह्रस्वशाखिन। "ह्रस्वशाखाशिफ क्षुप" इत्यमर। कुटात्–वृक्षात्। "अनोकह कुट शाल" इत्यमर। पर्य्यटन्ती–भ्रमन्ती। कदलीदलखण्डम्–रम्भापत्रभागम्। वीजयन्ती–व्यजनयन्ती। भ्रमद्भि–चलद्भि, भ्रमरै–द्विरेफै, झङ्कृतानाम्–सशब्दानाम्। कैरवाणाम्–अम्भोजानाम्। सोपानै–नि श्रेणीभि। नि श्रेणिप्रान्तस्थायाम–अधि-

---

स्मरण करती हुई अपने प्राण को छोड दूगी। परन्तु क्षत्रियो के लिये कलङ्क असह्य होता है।

इतने मे ही दूर से "बहन!" यह आवाज, किसी बालक के द्वारा किये गये सम्बोधन की तरह, सुनाई पडी। सुनते ही चारहासिनी झट से उठ गई और जिस तरफसे आवाज सुनाई पडी थी उस तरफ मुह फेर कर—"गोपाल! बस, अभी आई"—इतना उत्तर तारस्वर से देती हुई सौवर्णी को उसने सान्त्वना दी। बाद मे "अरी भाभी! उठो, अब हम लोग चले" इतना विलासिनी से कहकर उसके साथ ही मन्दिर की ओर चल पडी।

इधर सावर्णी भी विक्षिप्त की तरह एक झाडी से दूसरी झाडी की ओर, एक वृक्ष से दूसरे वृक्ष की ओर चक्कर लगाती हुई, केले के पत्ते को तोड कर उसे पखे की तरह झलती हुई पूरब दिशाकी ओर काफी दूर तक चलते-चलते जब तालाब के पास जा पहुँची और वहाँ भिनभिनाते चञ्चल भौरो से आक्रान्त विकसित कमल-कुल के सौन्दर्य को देखती हुई सीढियो के सहारे से नीचे उतरने को ही थी कि एकाएक उसने सुना कि सीढियो के पास से —— से

वती च अकस्माच्छुश्राव नि श्रेणि-प्रान्तस्थ-शिला-वेदिकास्थस्य कस्यापि 'उल्लङ्घ्य सिन्धो सलिलम्' इति हनूमत्स्तोत्र-पाठम्। झटिति तत उन्मुखीभूय पश्यन्ती चावालोकयद्-यत् कश्चिदंस-द्वय-लम्बमान-धूसरित-जटाजूट, दीप-शिखा-दीप्ति-द्योतमान-विशाल-कुङ्कुम-तिलक, भगवच्चरण-चिह्नाङ्कित-ललाट, पीत-मृत्तिका-चूर्ण-च्छुरित-वदन-वक्षो-बाहु-दण्ड, तुलसी-कमलाक्ष-माला-विलम्बित-गल, रामनामाङ्कित-वसन-वेष्टित-मूर्द्धा, पीतवसनपरीधान, मृगचर्म्मासनस्थ, समीपस्थित-तुम्बीपात्र, तेज पुञ्जमिवोद्वमन् अल्पवया ब्रह्मचार्यस्तौति ।

---

रोहिणीकोणस्थायाम्, शिलावेदिकायाम-प्रस्तरवितर्दिकायाम्, स्थस्य-तिष्ठत । सलिलमिति—

उल्लङ्घ्य सिन्धो सलिल सलील
य शोकवह्नि जनकात्मजाया ।
आदाय तेनैव ददाह लङ्काम्
नमामि त प्राञ्जलिराञ्जनेयम् ॥

इति सम्पूर्णम्। असद्वये-स्कन्धद्वये लम्बमान धूसरित-धूलि-भरित, जटाजूटो यस्य स । दीपशिखादीप्तिरिव-आलोकसाधन-ज्वालाद्युतिवत्, द्योतमान-प्रकाशमान, विशाल-विपुल, कुङ्कुम-तिलको यस्य स । भगवच्चरणचिह्नेन, अङ्कितम्-मुद्रितम, ललाट यस्य स । पीत-मृत्तिकाया-रामरजस, चूर्णेन, छुरितम्-रूषितम्, वदनवक्षोबाहुदण्ड यस्य स । तुलसी-कमलाक्षमालया विलम्बितो गलो यस्य स । रामनामाङ्कितेन-रामाभिधान-चिह्नितेन, वसनेन-वाससा, वेष्टित, मूर्धा-शिरो यस्य स । पीत वसन परीधान यस्य स । तेज पुञ्जम्-प्रकाशसमूहम्। उद्वमन्-उद्गिरन्। अल्प-वया-तरुण ।

---

चबूतरे पर विद्यमान कोई व्यक्ति 'उल्लङ्घ्य सिन्धो सलिलम्' (समुद्र के दुस्तर जल का उल्लङ्घन करके) इत्यादि हनूमान्‌जी के स्तोत्र का पाठ कर रहा था। चट से जब उसने उधर अपनी दृष्टि डाली तो देखा कि वह स्तोत्र-पाठक था एक अत्यन्त तेजस्वी युवक ब्रह्मचारी। उसकी भूरे रङ्ग की जटाएँ दोनो कन्धो पर लटक रही थी, वह दीप-शिखा की प्रभा की तरह प्रकाशमान

त यथा यथा नेदीयास प्रवेशमासाद्य गम्भीरमवलोकितवती, तथा तथा गाम्भीर्यमौदार्य, तेज प्रचय चाधिकमधिकमुपलभमाना, स्तव-समाप्तौ तेनापि वीक्षिता, शिरसाऽञ्जलि बद्ध्वा प्रणनाम। तेन च "जयति श्रीरामचन्द्र '-इत्युक्ता बद्धकरसम्पुटा समपृच्छत्-"स्वामिन्! किमपि निर्विवेदयिषत्येषा दीनदीनाऽबला"।

स्वामी—[ किञ्चित् गणायत्वेव ] जाने कन्यापि क्षत्रिययूनो विषये प्रश्न।

---

नेदीयासम्-अतिनिकटगतम्। गम्भीरम्-गाढम्। गाम्भीर्यम्-गूढप्रकृतित्वम्। तेज प्रचयम्-प्रतापव्रातम्। उपलभमाना-प्राप्नुवती। स्तवस्य-स्तुते, समाप्तौ-अन्ते। तेन उक्ता-प्रणामप्रत्यभिनन्दनरूपेण कथिता। तथा च मनु-"अभिवादनशीलस्य न करोत्यभिवादनम्। आशिष वा न कुरुते स याति नरक ध्रुवम्॥" बद्धकरसम्पुटा-कृताञ्जलिका। निर्विवेदयिषति-निवेदयितुमिच्छति। दीनदीना-अतिकृपणा। अवला-नारी।

क्षत्रियस्य, यून-युवकस्य, नववयस। क्षत्रियश्चासौ युवा वा, तस्य।

---

केशर का विशाल तिलक लगाए हुए था, उसके ललाट पर भगवान् के चरणारविन्द का चिह्न अङ्कित था, उसके मुख, हृदय तथा बाहुदण्ड पर राम-रज का चूर्ण पोता हुआ था, उसके गले मे तुलसी, कमल तथा रुद्राक्ष की मालाएँ लटक रही थी, उसके शिर पर रामनाम से अङ्कित कपडे की पगडी बँधी हुई थी, वह पीतवस्त्र पहने हुये मृगचर्म पर आसन लगाये था और बगल मे उसकी कमण्डलु ( तुम्बा ) रखी हुई थी।

ज्यो-ज्यो उसके पास पहुँचती हुई वह सौवर्णी उस ब्रह्मचारी को देखती थी त्यो-त्यो उसकी गम्भीरता, उदारता तथा तेजस्विता मे उत्तरोत्तर उत्कर्ष प्रतीत होता जा रहा था। उसी बीच ब्रह्मचारी का स्तोत्रपाठ भी समाप्त हो गया और इसलिए उसने भी जब सौवर्णी की ओर अपनी दृष्टि डाली तब सौवर्णी ने हाथ जोडकर उस ब्रह्मचारी को प्रणाम किया। जब प्रत्यभिवादन के रूप मे उस ब्रह्मचारी ने "जय भगवान् श्री रामचन्द्रजी" कहा तब हाथ जोडकर सामने खडी सौवर्णी ने ब्रह्मचारी से पूछा—"महाराज! दुखिया अबला आपसे कुछ निवेदन करना चाहती है"।

सौवर्णी—[ चकितेव ] भगवन् ! धन्य भवतस्तपोबलम् ! न किमप्यज्ञात स्वामिन । परत कथ्यताम् ।

स्वामी—स तु प्रभुणा विद्रोहीत्यवहेलित ।

सौवर्णी—अपि सत्यमेतत् ? हा कष्टम् !

स्वामी—[ पुनर्विचिन्त्य ] तथ्योऽय वृत्तान्त ।

सौवर्णी— तत ?

स्वामी—तत स नाहमपराधीति प्रभुमसकृत्तदुक्त्वा प्रणम्य गृहादिकमखिल विसृज्य क्वापि निर्गत ।

सौवर्णी—धिक् ! नाह तादृशमुदारस्वभाव कुलीन युवान विद्रोहीति विश्वसिमि। सूर्यो यदि प्रत्यगुदियात्, गगनतल वा प्रफुल्ल-कमल-मण्डल मण्डितमवलोक्येत, ततोऽपि न भवेन्मे विश्वासस्तदीयकपटस्य।

---

अवहेलित –तिरस्कृत ।

तथ्य –सत्य ।

प्रत्यक्–पश्चिमायाम् । अव्ययमिदम् । उदियात्–उदय प्राप्नुयात । प्रफुल्ल-कमलमण्डलम्-विकसितपद्मनिचयनिचितम् । तदीयस्य, कपटस्य–प्रवञ्चनस्य ।

---

स्वामी ( ब्रह्मचारी )—[ कुछ विचार-विमर्श करने के बाद ] मै समझ गया । आपका प्रश्न किसी क्षत्रिय युवक के प्रसङ्ग मे है ।

सौवर्णी—[ चकित-सी होकर ] भगवन् ! आपका तपोबल धन्य है । आपके लिए तो कुछ भी अज्ञात नही हो सकता । कृपया इसके आगे की बाते भी बतलाये ।

स्वामी—महाराज ने विद्रोही समझ कर उस क्षत्रिय-युवक का अपमान किया ।

सौवर्णी—क्या यह सत्य है ? हाय ! यह तो बहुत ही दु खद बात है ।

स्वामी—[ फिर कुछ सोचकर ] हाँ, यह सत्य ही है ।

सौवर्णी—अच्छा तो उसके बाद . ?

स्वामी—इसके बाद उस युवक ने "मैं अपराधी नही हूँ" यह बात बार-बार महाराज से कहकर उन्हे प्रणाम किया और पीछे घर-बार कोछोड कर कही निकल गया ।

स्वामी—[ मुखमन्यत कृत्वा, मन्द मन्दम् ] भाग्यमिद तस्य यद् भवत्येव दृढ त धार्मिक प्रत्येति ।

सौवर्णी—स्वामिन्! भक्तिवलेन परोक्षमपि प्रत्यक्ष भवत । कथयतु भवानेव कि सत्य वीरोऽमो प्रभु गुप्त व्यरुणत् ?

स्वामी—तस्य वशे प्रभुद्रोही कोऽपि नाभूत्, सोऽपि विनैव दोष मात्सर्य-पूरितेनेर्ष्या-परवशेन पिशुनेन निन्दित, विनैव विचार प्रभुणा कोपविपयीकृत ।

सौवर्णी—अथ कुशलेन जीवति ?

---

प्रत्येति–विश्वसिति ।

भक्तिबलेन–स्वसेवावलेन । परोक्षमपि–इन्द्रिय।गोचरमपि। प्रत्यक्षम्–साक्षात् । व्यरुणत्–व्यद्रुह्यत् ।

मात्सर्यपूरितेन–परोत्कर्पासहिष्णुत्वभरितेन । ईर्ष्यापरवशेन–विद्वेषपरतन्त्रेण । पिशुनेन–सूचकेन, खलेन वा ।

---

सौवर्णी—हाय धिक्कार है! मुझे तो विश्वास नही होता कि उस तरह का उदार स्वभाव वाला कुलीन युवक भी विद्रोही हो सकता है। भले ही भगवान् सूर्य भी पश्चिम दिशा मे उदित होने लग जॉय और शून्य आकाश-मण्डल भी विकसित कमल-कुल से मण्डित दीखने लग जाय, परन्तु मुझे इस बात मे विश्वास नही हो सकता है कि उस युवक ने राजा के साथ छल किया होगा।

स्वामी—[ मुँह फेरकर शनै शनै ] यह तो उस युवक का सौभाग्य है कि आप भी उसे इतना कट्टर धार्मिक मान रही है।

सौवर्णी—स्वामी जी! तपस्या के प्रभाव से परोक्ष भी आपके लिए प्रत्यक्ष है। आप ही बतलाएँ कि उस वीर ने क्या वस्तुत राजद्रोह किया था ?

स्वामी—उसकी वशपरम्परा मे आजतक कोई भी राजद्रोही व्यक्ति नही हुआ है। वह भी निरपराध था किन्तु दूसरो की उन्नति को देखने मे असमर्थ विद्वेष-पूर्ण किसी चुगलखोर ने महाराज के समक्ष उसकी झूठी शिकायत कर दी और महाराज भी बिना सोचे विचारे ही उसपर बिगड गये।

सौवर्णी—अच्छा तो क्या वह वीर अभी कुशलपूर्वक जी रहा है ?

स्वामी—जीवति ।

सौवर्णी—अपि पृच्छामि का निर्बन्धस्तस्य ?

स्वामी—( अङ्गुलिषु गणयित्वा ध्यात्वा च ) स प्रकाशेनेव पौरुषप्रचयसम्पादितेन यशसा धरातलं धवलीकृत्य कलानिधिरिव परस्तादात्मानं प्रकटयितुमिच्छति । अन्यथा मिथ्याकलङ्क एव च वर्द्धमाने प्राणानपि परिजिहासति ।

सौवर्णी—( आकाशे चक्षुषी स्थिरयित्वा ) प्राणनाथ ! वरं प्राणत्यागः न च कलङ्क-मलीमसं जीवनम् । किन्तु एषा हतभाग्या ! [ इति निःशब्दमरोदीत् ]

स्वामी—( मुखमन्यतः परावृत्य कानिचिदश्रूणि विमुच्य )भद्रे ! वेद्मि निष्कपट-प्रणयिनी भवती । पतिव्रतानां पुण्येन किं न भवति ? इति

---

निर्बन्ध –आग्रह ।

प्रकाशेनेव–आलोकेनेत्युपमा । पौरुषप्रचयसम्पादितेन–पुरुषकारसमूहार्जितेन, यशसा–कीर्त्या । धवलीकृत्य–श्वेतीकृत्य । कलानिधिरिव–इन्दुरिव । परस्तात्–अनन्तरम् । मिथ्याकलङ्के–अनृता-पवादे । वर्द्धमाने–एधमाने । परिजिहासति–परित्यक्तुमिच्छति ।

कलङ्कमलीमसम्–अपवादमलिनम् ।

---

स्वामी– हां, जी रहा है ।

सौवर्णी—क्या मैं आप से यह भी पूछ सकता हूँ कि उस वीर का निश्चित मनोरथ क्या है ?

स्वामी—[ अङ्गुलियों पर गणना करने के पश्चात् ध्यान करके ] वह अपने विविध पौरुष से, अर्जित यश से, इस समस्त धरातल को प्रकाश की तरह उज्ज्वलित करने के बाद चन्द्रमा की तरह अपने को व्यक्त करना चाह रहा है । यदि वह ऐसा नहीं कर सका, प्रत्युत उसका मिथ्या कलङ्क ही फैलता रहा, तो वह अपने प्राण को भी छोड देने का इच्छुक है ।

सौवर्णी—[ आकाश की ओर टकटकी लगाकर देखती हुई ] प्राणनाथ ! कलङ्कित जीवन से मरना ही अच्छा है ! किन्तु मेरा भाग्य फूट गया । [ यह कहकर निःशब्द कर रोने लग गई ]

भवत्या एव निश्चलानुरागेण पुण्यबलेन च कदाचित् स कृतकार्यो भवेत्।

सौवर्णी—महामान्य ! यद्यपि स निगूढ एव चरिष्यति, तथाऽपि किमहं तं द्रष्टुं शक्ष्यामि ?

स्वामी—अहं स्वच्छन्दं विचरामि। कदाचित् तेन सह क्वचिन् मेलनं भवेत्, तदहं निखिलं तव दुःख-वृत्तान्तं कथयिष्यामि, समये-समये तुभ्यमात्मानं दर्शयितुं चानुरोत्स्यामि।

यावदेष समाप्नोत्यालापं, तावदकस्मात्सोपानोपान्तस्थ-वट-कुट-कुटीरादश्रावि—"तिष्ठ रे तिष्ठ सौवर्णि ! चिररात्राय त्वं रघुवीरा-

---

अश्रूणि—अस्राणि। अयं रघुवीर एव साधुवेष इति नाविज्ञातप्रायं स्यात्पाठकानां विवेकिनाम्। निष्कपटप्रणयिनी—निर्व्याजप्रेमिका। वस्तुतस्तु सकपटं प्रणयो भवत्येव नेति विदुषां सम्मतिः। निश्चलेन—अचञ्चलेन, अनुरागेण—प्रणयेन।

निगूढ—नितान्तं गुप्तः। शक्ष्यामि—पारयिष्यामि।

अनुरोत्स्यामि—अनुरोधं करिष्यामि।

वटकुट—वटवृक्ष एव कुटीरं क्षुद्रगृहं, तस्मात्।

---

स्वामी—[ मुँह फेरकर आँसू बहाते हुए ] भद्रे ! मैं जानता हूँ कि उस व्यक्ति से आपका निश्छल प्रेम है। पतिव्रताओं के पुण्य के प्रभाव से क्या नहीं हो सकता ? इसलिए आपके अनन्य प्रेम तथा पुण्य के प्रभाव से उसका उपर्युक्त मनोरथ अवश्य ही सफल होगा।

सौवर्णी—माननीय महाशय ! जबतक उनकी इच्छा पूरी न होगी तब तक तो वे गुप्त रूप मे पर्यटन करते रहेंगे। किन्तु क्या इस बीच उन्हे मैं देख सकूँगी ?

स्वामी—देखिए, मैं तो स्वच्छन्द परिभ्रमण करता ही हूँ। यदि कभी उनसे मेरी भेंट हुई तो मैं आपकी सारी क्लेशकथाएँ उनसे कहूँगा और उनसे अनुरोध भी करूँगा कि वे समय-समय पर आपको दर्शन दिया करें।

ब्रह्मचारी तथा सौवर्णी का यह वार्त्तालाप समाप्त होने को ही था कि अचानक सीढ़ियों के समीप से वर्त्तमान वटवृक्षों की कुटिया से यह क्रोधपूर्ण भयङ्कर शब्द सुनाई दिया—"अरी सौवर्णी ! जरा रुक तो जा ! चिरकाल से तेरे मन मे रघुवीर की वीरता का दम्भ था। लेकिन आज मैं

भिमानिन्यासी । इदानी त्वा बलाद वशवदा करोमि"—इति कोपेने-वोदीरित क्रूर शब्द । तदाकर्ण्यैव सौवर्णी कुलमर्यादा-भङ्ग-भीरु झटिति "रक्ष रक्षेति" व्याहरन्ती, स्वामिनमाश्लिपत् । सोऽपि "बाले ! मा भैषी" इत्याम्रेड्य कथयन्नुत्थाप्य ता स्वासनादन्यत मस्थाप्य, सम्मुख सोपान-परम्परातोऽवतरन्त खडखडायित-पादत्राण, कृष्ण-वसन, मुण्डित-श्मश्रु-कूर्च, करकलित-च्छुरिकमस्पष्टाकृति, कञ्चन युवानमपश्यत् । तथा दृष्ट्वैव स्वामी बद्धपरिकर समाकुञ्चितजट, स्वतुम्बीपात्रादेका छुरिकामादाय, हस्ते धृत्वा, किञ्चिदग्रत उपसृत्य, योद्धु सज्ज समतिष्ठत। स त्वागत्य स्वामिद्वितीया सौवर्णीमाक-लय्य, कोपस्फुरिताधर उवाच—"कुलटे ! रघवीर च्स्वसि, भिक्ष-कांश्चैतादृशान् रहसि भाषसे। न च मया बहुश प्रार्थ्यमानाऽपि पूर्ण-तया वीक्षसे । तदद्य त्वा बलादश्वस्य पृष्ठे बद्ध्वा नेष्यामि" ।

---

वशवदाम्—स्वाधीनाम् । कुलमर्य्यादाया—पातिव्रत्यरक्षणरूपान्वय-सीमाया, भङ्गात्—खण्डनात्, भीरु—भीता । आश्लिषत्—आलिङ्गत् । स्वास-नात्—स्वविष्टरत । खडखडायिते—खडखडशब्दकारिणी, पादत्राणे—उपानहौ यस्य, तम् । कृष्णवसनम्—कालवाससम् । करे कलिता—धारिता छुरिका—असिधेनुका येन, तम् । बद्धपरिकर—सन्नद्धकच्छ । समाकुञ्जिततजट—बद्धकेश । स्वतुम्बीपात्रात्—निजालाबुभाजनात् । उपसृत्य—गत्वा । सज्ज—सन्नद्ध । स्वामी—सन्यासी, द्वितीय—सहाय, यस्या सा। पक्षे वस्तुतश्च प्रकृते स्वामी—पतिरेव द्वितीयो यस्या सा। कोपस्फुरिताधर—क्रोधचञ्चलोष्ठ । भिक्षुकान्—याचकान् । रहसि—एकान्ते ।

---

अपने वश मे कर ले रहा हूँ" । इस बात को सुनते ही अपने कुल की मर्य्यादा के नेष्ट होने से डरनेवाली सौवर्णी तत्क्षण ही "बचाइए, बचाइए" यह कहती हुई स्वामी जी के शरीर मे लिपट गई । "बाले ! डरो मत" यह कहते हुए स्वामीजी ने भी उसे उठाकर अपने आसन के समीप बैठा दिया और सामने देखा कि एक अपरिचेय स्वरूप वाला युवक—जिसके वस्त्र काले थे, दाढी-मूँछ मुडी हुई थी और हाथ मे एक छुरा था—जूता खटखटाते हुए सीढियों से उतर रहा है । उस मुद्रा मे उस युवक को उतरते देखते ही स्वामी जी ने

स्वामी– कस्त्व रे ! सती कुमारी कुलटा वदसि ! कस्य सामर्थ्यमस्मिन् हनूमत उद्यान-प्रान्ते एव बलात्कार मनसाऽपि चिन्तयितुम् ?

तत स आह— भिक्षुक ! त्वमपि च्छुरिका वहसि। ( विहस्य ) त्वयि भिक्षापात्र शोभते, न तु शस्त्रम्।

स्वामी —मूढ ! ब्रह्मचर्य-व्रत-रक्षायै भिक्षापात्र वहाम, किन्तु क्रूरस्य तव हत्यायै शस्त्रमपि धारयाम ।

---

सतीम्—सच्चरिताम्। कुमारीम्—अविवाहिताम्। कुलटाम—व्यभिचारिणीम्। सामर्थ्यम्—शक्ति । उद्यानप्रान्ते—वाटिकैकदेशे। बलात्कारम—साहसकर्म।

ब्रह्मचयव्रतस्य, रक्षायै—पालनाय। भिक्षापात्रम्—याच्ञामत्रम्। क्रूरस्य—क्रूरनाम्न, कठोरकृत्यनिरस्नस्य च, हत्यायै—मारणाय।

---

भी कमर कसकर अपनी जटाओ को बाँधकर अपने तुम्बे से एक छुरा निकाला और थोडा-सा आगे बढकर उसके साथ युद्ध करने के लिए तैयार हो गये। उधर उस युवक ने आते ही जब देखा कि सौवर्णी के साथ एक ब्रह्मचारी भी है तो उसका अधरोष्ठ क्रोध से कापने लग गया और फिर सौवर्णी से उसने कहा––"अरी कुलटा ! एक ओर तो तू रघुवीर को चूमती हे और दूसरी ओर इस तरह के कपटी भिक्षुओ से भी एकान्त मे बाते किया करती है। मैं इतनी प्रार्थना तेरी करता रहा, पर मेरी ओर तो तू पूरी-पूरी दृष्टि भी नही डालती। ये लो, आज मे तुझे बरबश बाँधकर घोडे की पीठ पर अपने साथ ले चल रहा हूँ"।

स्वामी—अरे ! तुम कोन हो ? इस सती कन्या को कुलटा कह रहे हो ? हनुमान् जी की इस वाटिका मे किसी अबला के साथ बलात्कार करने के लिये सोचने की हिम्मत किसमे हो सकती है ?

उस युवक ने कहा—अरे भिक्षुक ! तुम भी छुरा रखते हो ? [ हँसकर ] चह भिक्षापात्र तुम्हे शोभा देता है, यह छुरा नही।

स्वामी—मूर्ख ! अपने ब्रह्मचर्य-व्रत के निर्वाह के लिए मै भिक्षापात्र भी रखता हूँ और तुम जैसे 'क्रूर' की हत्या के लिए यह छूरा भी।

स —[ किञ्चित स्तब्धीभूय ] किं कथयसि ? क्रूरसिंह परिचितवानसि ? ततोऽपि किम् ? तवोपवीत पश्यन् ब्रह्महत्याया बिभेमि ।

स्वामी—नास्मि ब्राह्मण । अहं क्षत्रिय-ब्रह्मचारी । जाने त्वाम, त्वमेव क्रूरसिंहोऽसि । त्वमेव रघुवीर-निर्वासन-पिशुनोऽसि, त्वमेव च कुलकन्या-बलात्कार-पातक पतयालुरसि । पश्यन्त्वेषाऽपि क्षत्रिय-कुमारी रघुवीर-प्रत्यर्थिन प्राणदण्डम् ।

तत सक्ष्वेडमुभौ दक्षान् वाम'श्च मार्गाश्चरन्तौ विकोश-च्छुरिका-हस्तौ परस्पर जिघासया समवर्तिपाताम् । तावदकस्मात् क्रूरसिंह स्वामिनो वाम भुज-मूल लक्ष्यीकृत्य च्छुरिका प्रहितवान् । स्वामी तु बाहु-स्पृष्टाग्रच्छुरिकमेव हस्त वामहस्तेन दृढ गृहीत्वा, दक्ष—हस्तेन

---

स्तब्धीभूय—स्थगितीभूय नामश्रवणत । परिचितवान्—विज्ञातवान् । रघुवीरस्य निर्वासने—निष्कासने । पिशुन —"चुगुलखोर" इति हिन्दी । कुलकन्याया —कुलीनबालिकाया ,बलात्काररूपे पातके—अघे, पतयालु —पतनशील । रघुवीरस्य, प्रत्यर्थिन —शत्रो ।

सक्ष्वेडम्—ससिंहनादम् । चरन्तौ—भ्रमन्तौ । विकोशच्छुरिकाहस्तौ—नग्नासिधेनुकाकरौ । जिघासया—मारणेच्छया । समवर्तिषाताम्—समस्थिषाताम् । बाहौ सृष्टा—ससक्ता, अग्रच्छुरिका—असिधेनुकाग्र यस्मिन्नेवम्भूतम।

---

वह युवक—[ कुछ स्तब्ध-सा होकर ] क्या कह रहे हो ? तुम 'क्रूर-सिंह' को पहचानते हो क्या ? और यदि पहचानते भी हो तो इससे क्या होने-वाला है ? केवल तुम्हारे यज्ञोपवीत को देखकर मुझे ब्रह्महत्या का भय हो रहा है ।

स्वामी—नही नही, मै ब्राह्मण नही हू । मै तो क्षत्रिय-कुल का एक ब्रह्म-चारी हू । मैं तुझे अच्छी तरह जानता हूँ, तू ही क्रूरसिंह है ना ? रघुवीर को निकलवाने वाला चुगलखोर भी तू ही है, इस कुलीन कन्या के साथ बलात्कार जैसे महापाप से अपने को नीचे गिराने वाला भी तू ही है। लो, आज यह क्षत्रिय-कुमारी भी रघुवीर के शत्रु को दिये जानेवाले प्राणदण्ड को अपनी आंखो देख ले ।

स्वामी– कस्त्व रे ! सती कुमारी कुलटा वदसि ! कस्य सामर्थ्य-मस्मिन् हनुमत उद्यान-प्रान्ते एव वलात्कार मनसाऽपि चिन्तयितुम् ?

तत स आह– भिक्षुक ! त्वमपि च्छुरिका वहसि। ( विहस्य ) त्वयि भिक्षापात्र शोभते, न तु शस्त्रम्।

स्वामी —मूढ ! ब्रह्मचर्य-व्रत-रक्षायै भिक्षापात्र वहाम, किन्तु क्रूरस्य तव हत्यायै शस्त्रमपि धारयाम ।

---

सतीम्–सच्चरिताम्। कुमारीम्–अविवाहिताम्। कुलटाम–व्यभिचारिणीम्। सामर्थ्यम्–शक्ति । उद्यानप्रान्ते–वाटिकैकदेशे। वलात्कारम–साहसकर्म।

ब्रह्मचयव्रतस्य, रक्षायै–पालनाय। भिक्षापात्रम्–याच्ञामत्रम्। क्रूरस्य–क्रूरनाम्न, कठोरकृत्यनिरस्तस्य च, हत्यायै–मारणाय।

---

भी कमर कसकर अपनी जटाओ को बाँधकर अपने तुम्बे से एक छूरा निकाला आर थोडा-सा आगे बढकर उसके साथ युद्ध करने के लिए तैयार हो गये। उधर उस युवक ने आते ही जब देखा कि सौवर्णी के साथ एक ब्रह्मचारी भी है तो उसका अधरोष्ठ क्रोध से काँपने लग गया और फिर सौवर्णी से उसने कहा––"अरी कुलटा ! एक ओर तो तू रघुवीर को चूमती हे और दूसरी ओर इस तरह के कपटी भिक्षुओ से भी एकान्त मे वाते किया करती है। मैं इतनी प्रार्थना तेरी करता रहा, पर मेरी ओर तो तू पूरी-पूरी दृष्टि भी नही डालती। ये लो, आज मे तुझे वरवश बाँधकर घोडे की पीठ पर अपने साथ ले चल रहा हूँ"।

स्वामी—अरे ! तुम कोन हो ? इस सती कन्या को कुलटा कह रहे हो ? हनुमान् जी की इस वाटिका मे किसी अवला के साथ वलात्कार करने के लिये सोचने की हिम्मत किसमे हो सकती हे ?

उस युवक ने कहा—अरे भिक्षुक ! तुम भी छुरा रखते हो ? [ हँसकर ] यह भिक्षापात्र तुम्हे शोभा देता हे, यह छुरा नही।

स्वामी—मूर्ख ! अपने ब्रह्मचर्य व्रत के निर्वाह के लिए मै भिक्षापात्र भी रखता हूँ और तुम जैसे 'क्रूर' की हत्या के लिए यह छूरा भी।

स —[ किञ्चित् स्तब्धीभूय ] किं कथयसि ? क्रूरसिंह परिचितवानसि ? ततोऽपि किम् ? तवोपवीत पश्यन् ब्रह्महत्याया बिभेमि ।

स्वामी—नास्मि ब्राह्मण । अहं क्षत्रिय-ब्रह्मचारी । जाने त्वाम्, त्वमेव क्रूरसिंहोऽसि ! त्वमेव रघुवीर-निर्वासन-पिशुनोऽसि, त्वमेव च कुलकन्या-बलात्कार-पातक पतयालुरसि । पश्यन्त्वेषाऽपि क्षत्रिय-कुमारी रघुवीर-प्रत्यर्थिन प्राणदण्डम् ।

तत सक्ष्वेडमुभौ दक्षान् वामंश्च मार्गांश्चरन्तौ विकोश-च्छुरिका-हस्तौ परस्पर जिघासया समवर्तिपाताम् । तावदकस्मात् क्रूरसिंह स्वामिनो वाम भुज-मूल लक्ष्यीकृत्य च्छुरिका प्रहितवान् । स्वामी तु बाहु-स्पृष्टाग्रच्छुरिकमेव हस्त वामहस्तेन दृढ गृहीत्वा, दक्ष-हस्तेन

---

स्तब्धीभूय—स्थगितीभूय नामश्रवणत । परिचितवान्—विज्ञातवान् ।
रघुवीरस्य निर्वासने—निष्कासने । पिशुन —"चुगुलखोर" इति हिन्दी । कुलकन्याया —कुलीनबालिकाया ,बलात्काररूपे पातके–अघे, पतयालु —पतनशील । रघुवीरस्य, प्रत्यर्थिन —शत्रो ।
सक्ष्वेडम्—ससिंहनादम् । चरन्तौ—भ्रमन्तौ । विकोशच्छुरिकाहस्तौ—नग्नासिधेनुकाकरौ । जिघासया—मारणेच्छया । समवर्तिषाताम्—समस्थिपाताम् । बाहौ सृष्टा—ससक्ता, अग्रच्छुरिका—असिधेनुकाग्र यस्मिन्नेवम्भूतम्।

---

वह युवक—[ कुछ स्तब्ध-सा होकर ] क्या कह रहे हो ? तुम 'क्रूरसिंह' को पहचानते हो क्या ? और यदि पहचानते भी हो तो इससे क्या होनेवाला है ? केवल तुम्हारे यज्ञोपवीत को देखकर मुझे ब्रह्महत्या का भय हो रहा है ।

स्वामी—नही नही, मैं ब्राह्मण नही हू । मैं तो क्षत्रिय-कुल का एक ब्रह्मचारी हू । मैं तुझे अच्छी तरह जानता हूँ, तू ही क्रूरसिंह है ना ? रघुवीर को निकलवाने वाला चुगलखोर भी तू ही है, इस कुलीन कन्या के साथ बलात्कार जैसे महापाप से अपने को नीचे गिराने वाला भी तू ही है । लो, आज यह क्षत्रिय-कुमारी भी रघुवीर के शत्रु को दिये जानेवाले प्राणदण्ड को अपनी आँखो देख ले ।

तस्य वक्षसि च्छुरिकया दृढ प्राहरत्, अपातयच्च । स तु पतितमात्र समुवाच—"रे । रघुवीरस्येव छुरिकया निहतोऽस्मि" । स्वाम्युवाच—"मूढ ! न जानीपे रघुवीर एव राघव ! माञ्च राघवाचार्य इति वदन्ति जना । व्यर्थमेव रघुवीर कलङ्कितवानसि–इति भुङ्क्ष्व खलतालताया फलम् ।" क्रूरस्तु तत्क्षणादेवोद्ध्वं-श्वास-प्रश्वास-पराधीन, समुत्तम्भितनयन, प्रस्खलद्रुधिर-धारा-स्नपित-सोपान, "हा रघुवीर ! हा राघव ! कृतस्य फलमासादित-वानस्मि । निर्दये सौवर्णि ! त्वदर्थ नङ्क्ष्यामि" –इति घुरघुरायितेन कण्ठेनास्पष्ट मुहराम्रेडयन् प्राणानत्याक्षीत् ।

वक्षसि–उरसि । प्राहरत्–अताडयत् । अपातयत्–अपोथयत् । निहत–ताडित । खलतालताया–दुष्टताव्रतते । ऊर्ध्वश्वासप्रश्वासयो–मरणकालिकश्वासप्रश्वासयो ,पराधीन–वशग । समुत्तम्भितनयन–समुत्तानमाननेत्र । प्रस्खलन्त्या–पतन्त्या, रुधिरधारया–लोहितप्रवाहेण, स्नपितानि–निर्णिक्तानि, सोपानानि–नि श्रेणयो येन स । त्वदर्थम्–त्वत्कृते । नङ्क्ष्यामि–म्रिये । प्राणान्–असून् ।

उसके बाद सिंहनाद के साथ ताल ठोकते हुये म्यान से बाहर निकाले गये अपने-अपने छुरे को हाथ मे लेकर एक दूसरे को मारने की इच्छा से दोनो व्यक्ति आमने-सामने खडे हो गये । बस झट से क्रूरसिंह ने ब्रह्मचारी जी की बायी भुजा के मूल को लक्ष्य करके छूरा चलाया । इधर स्वामीजी ने भी—बाये हाथ से उसके छुरा लिये हाथ को कस के पकड कर दाँये हाथ से क्रूरसिंह के हृदय पर अपने छुरे से ऐसा भयङ्कर प्रहार किया जिससे क्रूरसिंह जमीन पर गिर गया । गिरते ही वह चिल्ला उठा—"अरे ! मै तो समझ रहा हूँ कि मुझे रघुवीर का ही छूरा लगा है !" स्वामीजी ने कहा—"अरे मूर्ख ! क्या तुम नही जानते कि रघुवीर ही 'राघव' है ! मुझे ही लोग 'राघवाचार्य' कहा करते ह । ये लो, तुमने जो रघुवीर के ऊपर मिथ्या आरोप लगामा था उसके बदले अपनी दुष्टतास्वरूप लता के विषम फल का उपभोग करो ।" छूरा लगते ही क्रूरसिंह ऊर्ध्वश्वास का शिकार बन गया, उसकी आँखो मे चक्कर आ गया, उसके हृदय से बहती हुई खून की धारा से सीढियाँ धुल गई और

राघवाचार्यस्वामी च क्रूर-कवोष्ण-रक्ताक्ता छुरिका दक्षकरा-ङ्गुलि-पृष्ठ करभ मणिबन्ध कूर्पर च तडागजलेन प्रक्षाल्य, छुरिका कोशेनाऽऽच्छाद्य, तुम्बी-पात्रे निधाय, जटाजूट पुन प्रमार्य, उत्तरीय स्कन्धे सन्धार्य, मृग-चर्मासनमाकुञ्च्य कक्षे धृत्वा, सौवर्णीमुवाच-सुन्दरि ! मा स्म भैषी । उत्तिष्ठ, त्वदालयपर्यन्त त्वामनुसरिष्यामि । कुशलेन तातभवन-पर्यन्त यापयित्वा स्वच्छन्द विचरिष्यामि ।

सौवर्णी तु दृष्ट्वेमा रोमहर्षिणी घटनाम्, प्रत्यक्षीकृत्य च स्वामिनो विलक्षण वीर्यम्, कोऽयम् ? कुतोऽयम ? इति विभावयन्ती,

---

क्रूरस्य कवोष्णेन रक्तेन, अक्ताम्-आर्द्रा छुरिकाम् । करभम्-कराद् बहि । "मणिबन्धादाकनिष्ठ करस्य करभो बहि" इत्यमर । मणिबन्धम्-हस्तान्तिकस्थमस्थिबन्धम् । कूर्परम्-कफोणिम् । "केहुनी" इति हिन्दी ।

तुम्बीपात्रे-अलाबुभाजने । उत्तरीयम्-उत्तरासङ्गम् । आकुञ्च्य-सङ्कोच्य । कक्षे-बाहुमूले । अनुसरिष्यामि-अनुव्रजिष्यामि ।

रोमहर्षिणीम्-पुलककारिणीम्, भीषणामिति यावत् । विभावयन्ती-

---

खुर्राटे भरे कण्ठ से—"हा रघुवीर ! हा राघव ! मुझे अपने कुकृत्य का फल मिल गया । दयाशून्य सौवर्णी ! तेरे लिये ही मैं मर रहा हूँ"—यह कहते-कहते उसने प्राण छोड दिये ।

उसके पश्चात् राघवस्वामी ने भी क्रूरसिह के गरम खून से भीगे छूरे, अपने दाये हाथ के अङ्गुलिपृष्ठ, करभ ( कलाई से लेकर नाखून तक का हिस्सा ), कलाई तथा केहुनी को उस तालाव के पानी से धो कर—छुरे को कोश ( म्यान ) मे बन्द करके अपने तुम्बे मे रख लिया और अपने मृगचर्म को लपेट कर काँख मे दबाते हुए सौवर्णी से कहा—"सुन्दरी सौवर्णी ! डरो मत । चलो, तेरे घर तक मैं भी तेरे साथ चलूंगा और कुशलपूर्वक तुझे तेरे पिता के घर तक पहुँचाने के बाद फिर स्वच्छन्दतापूर्वक वहाँ से चल दूंगा ।"

वह सौवर्णी उस रोमाञ्चकारी घटना को तथा स्वामीजी की अद्भुत वीरता को देखकर उनके विषय मे—"ये कौन है ? कहाँ से आये है"—इस प्रकार तर्क-वितर्क करती हुई चुपचाप स्वामीजी के साथ अपने घर की ओर

तूष्णीका तेन सह स्वावासाभिमुखमुपससार। स्वालयस्य निकटे तेन विसज्यमाना च प्रणस्य "स्वामिन् ! पुन कदा दर्शन भवेदसाधारण-बन्धो, जीवन-दीक्षा-गुरो श्रीचरणस्य ?" इति पृष्टवती। "स्वच्छन्दा वयम, यदा कदैव पुनरायास्याम" इत्युत्तीर्णा, नैषा दासी विस्मरणीया, प्रायश समागमेन दर्शन-दानेन च कृतार्थनीया"—इति साम्रेड निवेदयन्ती, पुन प्रणम्य सम्मुखमपश्यद -यद राघवाचार्य स्वामी नास्ति। ततश्चाय स्वप्नो वा, माया वा, व्यामोहो वा--इति चिन्ता-चक्र-घूर्णित-चित्ता स्वावसथ प्रविवश।

× × ×

---

विवेचयन्ती। तूष्णीका-वाग्यता। स्वावासाभिमुखम्-स्वनिवासम्मुखम्। असाधारणबन्धो -निष्कारणमित्रस्य। जीवनदीक्षा-गुरो -प्राणदानपरायणस्य। कृतार्थनीया-कृतकृत्यता नेया। व्यामोह -चित्तविक्षिप्तता। चिन्ता-चक्रेण-विचारसन्तानेन, घूर्णित-भ्रान्तम्, चित्त यस्या सा। स्वावसथम्-स्वसदनम्।

× × ×

---

चल पडी। जब घर के पास ले जाकर स्वामीजी उसे छोडने लगे तब उसने उन्हे प्रणाम करके पूछा—"स्वामीजी ! श्रीमान् जैसे असाधारण बन्धु और जीवनदीक्षा के गुरु के दशन कब होंगे ?" इस पर स्वामीजी ने उत्तर दिया--"हम लोग स्वच्छन्द है। कभी फिर आ जायेगे।" उसके बाद "बार-बार इस दासी को आप भूलेंगे नही, बराबर अपने शुभागमन तथा दशन देने द्वारा इसे कृतार्थ करते रहेगे।" इस प्रकार से अनुनय-विनय करती हुई सौवर्णी ने जब स्वामीजी को फिर प्रणाम कर आगे की ओर अपनी दृष्टि डाली तो उसने देखा कि स्वामी राघवाचार्य गायब है। तत्पश्चात् "यह स्वप्न था या माया-जाल था या मेरा पागलपन था"—इस तरह की चिन्ता से चञ्चल चित्तवाली वह सौवर्णी अपने घर को चली गई।

महाराष्ट्रराजस्तु कालेन सर्वाणि स्वमित्राण्याकार्य, सर्वेषा सम्मति दृष्ट्वा, कैश्चिद्दिल्ली–गमनायानुमोद्यमान , परैर्वार्यमाणोऽपि, अन्ततो दिल्लीयात्रामेव निश्चितवान् ।

एकदा तु रात्रौ भटवेषेण स्वप्रजा अवलोकयितु पर्य्यटन् महाराष्ट्र-राजोऽकस्मात् द्रुम–निचय–च्छायातो द्रुतमागच्छन्त कञ्चन महात्मान-मिवादर्शत् । स तु पीत–रेणु–रूषित–सर्वाङ्ग , रामनामाङ्कितोत्तरीय , "जय जयेति" वदन् प्रणमन्त गुप्ताकारमेन शनैरुवाच ।

"वीर ! राजपुत्र-देशीया राजानोऽप्येते कन्यादानैर्यवनैरात्मान सम्बध्नन्तोऽर्द्धयवना एव । ये स्वतन्त्रानार्यदेशान् विजित्य यवनहस्ते

---

आकार्य–आहूय । अनुमोद्यमान –अनुज्ञायमान । वार्यमाण –निषि-ध्यमान ।

भटवेषेण–राजपुरुषनेपथ्येन । द्रुमनिचयच्छायात –वृक्षप्रकरच्छायाया । महात्मानम्–साधुम् । पीतरेणुरूषितसर्वाङ्ग –रामरजश्छुरितसकलशरीर । गुप्ताकारम्–गूढाकृतिम् ।

कन्यादानै –बालिकार्पणै । यवनै , सहयोगे तृतीया । आत्मानम्–स्वम्, सम्बध्नन्त –सम्मेलयन्त । अर्धयवना –नेमम्लेच्छा । स्वतन्त्रान्–स्वाधीन-

---

इधर महाराष्ट्रराज शिवाजी ने समय पर अपने सारे मित्रो को बुलवाया, उन सबो की राय ली । कुछ मित्रो ने उनके दिल्ली जाने का समर्थन भी किया और कुछ मित्रो ने उन्हे रोका भी, परन्तु अन्त मे उन्होने दिल्लीयात्रा का ही निश्चय किया ।

एक रात अपनी प्रजा की स्थिति को जानने के उद्देश्य से वीरवेष मे परि-भ्रमण करते हुये महाराष्ट्रराज ने वृक्षो की छाया से एक महात्मा जैसे व्यक्ति को शीघ्रता से अपनी ओर आते हुये देखा । सम्पूर्ण शरीर मे रामरज लगाये हुये, राम-नाम से अङ्कित द्वितीय वस्त्रवाले उस महात्मा ने गुप्तवेष मे घूमने-वाले महाराष्ट्रराज को जयध्वनिपूर्वक प्रणाम करके धीरे से कहा—

"वीर ! स्वतन्त्र हिन्दूराज्यो को जीतकर यवनो के हाथो मे समर्पित करने मे भी अपनी वीरता का अभिमान करते हुये मूँछ पर ताव देनेवाले

तूष्णीका तेन सह स्वावासाभिमुखमुपमनार। स्वालयस्य निकटे तेन विसज्यमाना च प्रणम्य "स्वामिन्! पुन कदा दर्शन भवेदसाधारण-बन्धो, जीवन-दीक्षा-गुरो श्रीचरणस्य ?" इति पृष्टवती। "स्वच्छन्दा वयम, यदा कदैव पुनरायास्याम" इत्युत्तीर्णा, नैषा दासी विस्मरणीया, प्रायश समागमेन दर्शन-दानेन च कृतार्थनीया"—इति साम्रेड निवेदयन्ती, पुन प्रणम्य सम्मुखमपश्यद् -यद राघवाचार्य स्वामी नास्ति। ततश्चाय स्वप्नो वा, माया वा, व्यामोहो वा--इति चिन्ता-चक्र-घूर्णित-चित्ता स्वावसथ प्रविवश।

× × ×

---

विवेचयन्ती। तूष्णीका-वाग्यता। स्वावासाभिमुखम्-स्वनिवासम्मुखम्। असाधारणवन्धो -निष्कारणमित्रस्य। जीवनदीक्षा-गुरो -प्राणदानपरायणस्य। कृतार्थनीया-कृतकृत्यता नेया। व्यामोह -चित्तविक्षिप्तता। चिन्ता-चक्रेण-विचारसन्तानेन, घूर्णित-भ्रान्तम्, चित्त यस्या सा। स्वावसथम्-स्वसदनम्।

× × ×

---

चल पडी। जब घर के पास ले जाकर स्वामीजी उसे छोडने लगे तब उसने उन्हे प्रणाम करके पूछा—"स्वामीजी! श्रीमान् जैसे असाधारण बन्धु और जीवनदीक्षा के गुरु के दर्शन कब होगे ?" इस पर स्वामीजी ने उत्तर दिया--"हम लोग स्वच्छन्द ह। कभी फिर आ जायेगे।" उसके बाद "बार-बार इस दासी को आप भूलेंगे नही, बराबर अपने शुभागमन तथा दशन देने द्वारा इसे कृताथ करते रहेगे।" इस प्रकार से अनुनय-विनय करती हुई सौवर्णी ने जब स्वामीजी को फिर प्रणाम कर आगे की ओर अपनी दृष्टि डाली तो उसने देखा कि स्वामी राघवाचार्य गायब है। तत्पश्चात् "यह स्वप्न था या माया-जाल था या मेरा पागलपन था"—इस तरह की चिन्ता से चञ्चल चित्तवाली वह सौवर्णी अपने घर को चली गई।

महाराष्ट्रराजस्तु कालेन सर्वाणि स्वमित्राण्याकार्य, सर्वेपा सम्मति दप्ट्वा, कैश्चिद्दिल्ली-गमनायानुमोद्यमान, परैर्वार्यमाणोऽपि, अन्ततो दिल्लीयात्रामेव निश्चितवान् ।

एकदा तु रात्रौ भटवेषेण स्वप्रजा अवलोकयितु पर्य्यटन् महाराष्ट्र-राजोऽकस्मात् द्रुम-निचय-च्छायातो द्रुतमागच्छन्त कञ्चन महात्मान-मिवादर्शत् । स तु पीत-रेणु-रूषित-सर्वाङ्ग, रामनामाङ्कितोत्तरीय, "जय जयेति" वदन् प्रणमन्त गुप्ताकारमेन शनैरुवाच ।

"वीर ! राजपुत्र-देशीया राजानोऽप्येते कन्यादानैर्यवनैरात्मान सम्बध्नन्तोऽर्द्धयवना एव । ये स्वतन्त्रानार्यदेशान् विजित्य यवनहस्ते

---

आकार्य-आहूय । अनुमोद्यमान -अनुज्ञायमान । वार्यमाण -निपि-ध्यमान ।

भटवेषेण-राजपुरुपनेपथ्येन । द्रुमनिचयच्छायात -वृक्षप्रकरच्छायाया । महात्मानम्-साधुम् । पीतरेणुरूषितसर्वाङ्ग -रामरजश्छुरितसकलशरीर । गुप्ताकारम्-गूढाकृतिम् ।

कन्यादानै -बालिकार्पणै । यवनै, सहयोगे तृतीया । आत्मानम्-स्वम्, सम्बध्नन्त -सम्मेलयन्त । अर्धयवना -नेमम्लेच्छा । स्वतन्त्रान्-स्वाधीन-

---

इधर महाराष्ट्रराज शिवाजी ने समय पर अपने सारे मित्रो को बुलवाया, उन सबो की राय ली । कुछ मित्रो ने उनके दिल्ली जाने का समर्थन भी किया ओर कुछ मित्रो ने उन्हे रोका भी, परन्तु अन्त मे उन्होंने दिल्लीयात्रा का ही निश्चय किया ।

एक रात अपनी प्रजा की स्थिति को जानने के उद्देश्य से वीरवेष मे परि-भ्रमण करते हुये महाराष्ट्रराज ने वृक्षो की छाया से एक महात्मा जैसे व्यक्ति को शीघ्रता से अपनी ओर आते हुये देखा । सम्पूर्ण शरीर मे रामरज लगाये हुये, राम-नाम से अङ्कित द्वितीय वस्त्रवाले उस महात्मा ने गुप्तवेष मे घूमने-वाले महाराष्ट्रराज को जयध्वनिपूर्वक प्रणाम करके धीरे से कहा—

"वीर ! स्वतन्त्र हिन्दूराज्यो को जीतकर यवनो के हाथो मे समर्पित करने मे भी अपनी वीरता का अभिमान करते हुये मूँछ पर ताव देनेव

समर्प्पयन्तो वीरम्मन्यतया श्मश्रु परिमृशन्ति। इय धन्यता वा जघन्यता वा प्रमाणमत्र श्रीमद्‌हृदयमेव। कोऽयमासीन्मानसिहस्य मान, यद् यवनार्थमुदयपुराधीश्वर सकल-भारताभिजन-मान्य मेद पाट-परिवृढमत्यन्तमचिक्लिशत्? तस्यैवाऽध्वन्येषोऽध्वन्यो ढुण्ढारवन्यवन्यध्यक्षो जयसिह। मा श्रीमानत्र मायामयीमुररीकरोतु मन्त्रणाम्। यत्येत चेद्, महाराष्ट्रै सह विजयपुरेश्वर गोलखण्डेश्वर, उदयपुरेश्वर, योधपुरेश्वर, अपरे च वहवो वीरवरा महाराजा दिल्ली-द न-पक्षम-

स्वदेशीयनरपतिरक्षितान्। वीरम्मन्यतया-भटम्मन्यतया, श्मश्रु-मुखलोम, परिमृशन्ति-स्पृशन्ति "मूछो पर ताव देते ह" इति भाषायाम्। धन्यता-श्रेष्ठता। जघन्यता-नीचता। सकलभारताभिजनमान्यम्-समस्तहैन्दवनिवासिमाननीयम्। मेद पाटपरिवृढम्-मेवाराधीश्वरम्। "मेवाड" इत्यधुना प्रसिद्ध शब्दो "मेद पाट" शब्दापभ्र श इति व्यासादीनामभिप्राय। तर्करत्नमहोदयास्तु स्वीयेऽमरमङ्गले सव्युत्पत्तिक मेवारशब्दमेव तद्वाचकत्वेन स्थिरयन्ति। उभयोरपि शक्तत्व साधुत्वञ्चेति विवेचनापटव। अचिक्लिशत्-क्लेशितवान्। अध्वनि-मार्गे। अध्वन्य-पथिक। ढुण्ढारवन्या-ढण्ढारारण्यस्य, राजपुत्रदेशे जयपुरप्रान्तो 'ढुण्ढार' इत्युच्यते, या, अवनी-पृथ्वी, तस्या, अध्यक्ष-स्वामी। ढुण्ढारशब्देन वनीशब्द सयोज्य तद्वासिना तदध्यक्षस्य चारण्यकत्वमुद्घोषितम्। मायामयीम्-प्रवञ्चनासमेताम्। मन्त्रणाम्-परामशम्। यत्येत-यत्न क्रियेत। जर्जर-वृद्ध। निर्जरसाम्-देवानाम्। राजा-आध-

और अपनी-अपनी कन्या के अर्पण द्वारा यवनो के साथ सम्बन्ध स्थापित करने वाले से राजपूताने के राजा लोग भी वस्तुत अध-यवन ही है। इनकी यह महत्ता है या नीचता—इसके निणय के लिये आपका हृदय ही प्रमाण ह। मानसिंह के लिये यह कौन-सी मानास्पद बात हुई जो उन्होने समस्त भारतवासियो के सम्मान्य 'उदयपुर' सम्राट् 'मेवाड' के अधिपति को यवनो के पक्ष से इतना क्लेश दिया है। ये 'ढुण्ढार'—वन—प्रदेशाधिपति जयसिह भी मानसिह के ही पथ के पथिक है। इस की कपटपूण मन्त्रणा स्वीकार श्रीमान् कदापि न करे। यदि आप प्रयास करे तो मराठो के साथ-साथ विजयपुर के महाराज, गोलकुण्डेश्वर, उदयपुराधीश, योधपुर के राजा तथा अन्यान्य बहुत से

वलम्बेरन् । तदल वृद्धेन जयसिहेन ज्यौतिष-पण्डितेन। भवत्वेष जर्जरो निर्जरसा राजा, भर्जयतु च भवान् स्वगर्जन-तर्जन-ज्वलनेन वर्ज्यानेतान् भारतद्रुह ।"

तदाकर्ण्य यावद् वीरशिवराज किमपि विवक्षति, तावद् घन-च्छाय-पलाशि-पटल एवालीयत स्वामी । महाराष्ट्रेश्वरश्च सचिन्तो निवृत्य तादृक्षानेव स्वप्नान् पश्यन् रात्रिं निनाय। पुनश्च यथासमय मित्रैर्दिल्लीयात्रामेव निर्णीय, स्वात्मीयस्य स्वर्णदेवस्य हस्ते निखिल महाराष्ट्र-देश-राज्य-भार समर्प्य, अश्वारोहिणा पञ्चशती सहस्रञ्च पदातीना सह नीत्वा, मातर प्रणम्य, जयपुराधीश्वरादेशानुसारेण तदीयैरपि शतसङ्ख्यै सादिवीरैर्वृतो गौरेण, स्तन्यजीवेन, माल्यश्री-

पति । मृन स्त ।निहासनमलङ्करोतिति यावत्]। भर्जयतु—दाहयतु । स्वगर्जन-तर्जना।भिन्नेन, ज्वलनेन—दहनेन । रूपकम् । वर्ज्यान्—वर्जनीयान्, अस्पृश्यान् ।

घनच्छायपलाशिपटले—सान्द्रच्छायवृक्षसमूहे । अलीयत—अदृश्यताङ्गत ।

स्वात्मीयस्य—स्वीयस्य । स्वपद स्पष्टार्थम् । जयपुराधीश्वरस्य, आदेशस्य—आज्ञाया, अनुसारेण । तदीयै —जयसिहीयै, सादिवीरै —अश्वारोहि-

महाराज भी दिल्ली पर चढाई करने मे आपका साथ दे सकते है। इसलिये इस वृद्ध भविष्यवक्ता ज्योतिषी जयसिह की चिन्ता आप न करे। इस बूढे को देवराज इन्द्र बनने दे, किन्तु आप अपने सिहनाद तथा कोपानल से इन भारत-द्रोही पतित यवनो को जला दे।

साधु की बात सुनकर वीर शिवाजी कुछ कहने को चाहते ही थे कि सहसा वे साधु घनी छायावाले वृक्षो के समूह मे ही अन्तर्हित हो गये। तब महाराष्ट्रराज चिन्तित अवस्था मे ही अपनी राजधानी लौट आये और उसी प्रकार के स्वप्न देखते हुये उन्होने उस रात को बिताया। पुन उचित समय पर अपने मित्रो से दिल्ली जाने का निश्चय करने के बाद आत्मीय 'स्वर्णदेव' के हाथो महाराष्ट्र राज्य का सारा भार सौप दिया और ५०० घुडसवारो एवम् १००० पैदल सेनाओ को साथ लेकर अपनी आराधनीया माता को प्रणाम कर जयपुर-नरेश जयसिह के आदेशानुसार उनके भी १०० घुड-

केण, कविवर-भूषणशर्म्मणा च सहितोऽनिच्छन्नपि दिल्ली प्रतस्थे। प्रथमेनैव दिनेन क्रोश-दशक-मतिवाह्य, शैलतटेषु उपकारिका आयोज्य, साय समये पर्वतस्यैकस्य शोभा-वीक्षण-व्याजेन मित्रैरेव सहाधित्य-कामारूढ, तत्रैव शिलासु स्थित्वा विमनायमान, पुनरात्मीयैरेव-मालपत्।

महाराज —न जाने किमिति ग्लायतीव मे हृदयम्!

माल्यश्रीक —महाराज! शत्रु-गृह-प्रवेश एव ग्लानि-कारणम्।

भूषणशर्मा—महाराज! ग्लानिर्नाऽऽवहनीया, न रोचते चेदद्यापि प्रतिनिवृत्य जयसिंह-सेनैवासनीया। प्रस्थीयते चेद् दिल्ली गत्वा, अव-रङ्गजीवोऽपि वीक्षणीय। न भवतस्तथा ग्लानि, यथा स ग्लायति भवत्स्मरणेन। दृष्ट्वैव भवन्त हरिद्रा-द्रव-स्नापित-कपोल इव नि शो-

---

भटै। अनिच्छन्नपि—अनभिलपन्नपि। उप-कारिका—पटभवनानि। शोभा-वीक्षणव्याजेन-छटावलोकनच्छद्मना।

*ग्लायति—क्षीणहर्षतामापद्यते।*

शत्रुगृहप्रवेश—रिपुसदनगमनम्।

असनीया—क्षेप्तव्या, जेतव्येति यावत्। प्रस्थीयते—गम्यते। हरिद्रा-द्रवेण—महाराजनरसेन, स्नापितौ—धौतौ, कपोलौ—गण्डस्थले यस्य स।

---

सवारो के साथ गौरसिंह, स्तन्यजीव, माल्यश्रीक एव कविवर भूषणशर्मा सहित अनिच्छा से भी दिल्ली को चल पडे। पहले ही दिन १० कोसो की दूरी को तय करके पर्वतीय प्रदेश मे डेरा डाला और सन्ध्या के समय पर्वत की शोभा को देखने के छल से केवल अपने मित्रो को ही साथ लेकर एक पर्वत की अधित्यका ( ऊपर की समतल भूमि ) पर गये। वही पत्थर पर बैठकर खिन्न चित्त से अपने मित्रो के साथ फिर विचार करने लग गए।

महाराज—पता नही, मेरा मन इतना खिन्न क्यो हो रहा है?

माल्यश्रीक—महाराज! शत्रु के घर मे जाने के कारण ही मन इतना खिन्न हो रहा है।

भूषण—महाराज! खिन्नता नही रखनी चाहिये। यदि अब भी मन हिचक रहा है तो हम लोग लौट चले और जयसिंह की सेना को ही पहले

णितवदन, विस्मृततुरङ्ग, पारिप्लवकुरङ्ग इव कुरङ्ग, पर्यन्वे- षितसुरङ्ग, सवेपथु-दुरङ्ग, सवत्स्यंति समासादित-भयानक-नव-रङ्गोऽवरङ्ग। येन भवानी-नामक-खड्गेन भवानीकिनीविजय-लाभ-वता भवता विविधा आपद उत्तीर्णा, हस्ते एवास्ति स खड्गो भवत।

तावदकस्मादेकत समश्रावि—"महाराज! विरम, इतोऽपि प्रति-निवर्तस्व, मा विश्वासिहि दिल्लीकलङ्कम्, खड्गमाश्रय" इति गम्भीर

---

नि शोणितवदन –निर्लोहितानन। विस्मृततुरङ्ग –अनवधृताश्व। पारिप्लव-कुरङ्ग इव–चञ्चलहरिण इव। कुत्सितो रङ्ग–वर्ण यस्य स। पर्यन्वे-षितसुरङ्ग –गवेषितपलायनमार्ग। सवेपथूनि–सकम्पानि, दुरङ्गानि–दुर-वयवा, यस्य स। समासादित –लब्ध, भयानक, नव रङ्गो येन स। भवानीकिन्या –ससारस्थितनिखिलशत्रुवाहिन्या, विजयलाभवता–जय प्राप्तवता। आपद –आपत्तय।

समश्रावि–श्रुत। प्रतिनिर्वर्तस्व–परावृत्ति स्वीकुरु। मा विश्वसिहि, दिल्लीकलङ्कमिति शेष, मा विश्वास विधेहि अवरङ्गे। अत्र माशब्दो ननु

---

जीत ले। यदि दिल्ली ही चलना है तो चले, चलकर औरङ्गजेब को भी देख ही ले। आपकी याद करते ही जितनी खिन्नता औरङ्गजेब के मन मे आ जाती होगी उतनी खिन्नता आपके मन मे नही हो सकती है। आपको देखते ही उस औरङ्गजेब का वदन इतना पीला हो जायेगा जिससे ऐसा प्रतीत होने लग जायेगा कि उसके दोनो गाल हल्दी के रस से धुल गये है। उसे अपने घोडे की याद नही रह जायेगी, चञ्चल हरिण की कालिमा की तरह उसके शरीर पर भी कालिमा छा जायेगी, अपने को छिपाने या भागने के लिये वह सुरङ्ग खोजने लग जायेगा, भय-कम्पन से उसके शरीर के सारे अङ्ग-प्रत्यङ्ग विकृत हो जायेगे और उसके चेहरे पर क्षण-प्रति-क्षण रूप-परिवर्तन दीख पडने लग जायेगा। जिस 'भवानी' नाम के खड्ग से समस्त ससार की सेना को जीतने वाले आपने इतनी विपत्तियों को झेला है वह 'भवानी' तो आपके हाथ मे ही है।

उसी बीच कही से यही गम्भीर शब्द सुनाई दिया—"महाराज! रुक जाँय। यहाँ से भी आप लौट जाँय। दिल्लीकलङ्क यवन का विश्वास न करे,

शब्द । सर्वैस्तत पातितदृष्टिभिश्च स एव घृत-तुम्बी-पात्र, काञ्चन-चूर्ण-प्रचय-मृत्स्ना-मर्दित-सर्वाङ्ग, कृत-कुङ्कुम-तिलक, तुलसीमाला-लसद्विशाल-वक्ष स्थल, त्रिदण्डी स्वामी राघवाचार्यो दृष्ट । स स्वागतमात्र एव दक्षिण—हस्तमुत्थाप्य गम्भीर-घोषेण पुनरगादीत् ।

"वीर ! इतोऽपि विरम । चिर-प्रवृद्ध वैरम । अविश्वास्योऽव-रङ्गजीव । दिल्लीतो दूर महाराष्ट्र-सेना । स्फुरति च मे वाम नय-नम्, तदितोऽपि निवृताम् । यदि दिल्ली—वल्लभस्याज्ञया जयपुरेश्वरो

---

माङ्, अत एव न लुङ् । खड्गमाश्रय—सङ्ग्रामय । घृततुम्बीपात्र—गृहीतालावुभाजन । काञ्चनचूर्णप्रचयवत्—हिरण्य-क्षोदव्रातवत्, रुचिरया मृत्स्नया—प्रशस्तमृदा, मर्दित सर्वाङ्ग यस्य स । त्रिदण्डी—दण्डत्रयवान् । अर्जुनेनापि त्रिदण्डधारणमेव कृत सुभद्राहरण-प्रकरणे । ब्राह्मणसन्यासिना सदा दण्डत्रयधारणमेवोचितमिति स्पष्ट निरूपित विहितकल्पतरुपरिमलखण्डनै पण्डितस्वामिराममिश्रशास्त्रिभिर्महामहोपाध्यायै-रिति मूलकृदनुमोदिता तच्छिष्यकृता टिप्पणी । सोऽय सम्प्रदायवाद इति न विस्मर्तव्यम् । वैष्णवा हि त्रिदण्डिन । वैष्णवपुराणेषु त्रिदण्डधारणमर्जुनादे, शैवेषु चैकदण्डधारण दरीदृश्यत इति नेद किमपि । मिश्राणा खण्डनञ्च बालबुद्धिप्रतारणातिरिक्त न किमपीति पुराणमतदीपिकाया विस्पष्ट प्रतिपादितमिति तत एवावेक्षणीय वादरसिकै । सिद्धान्तन्तु नीलसरस्वती जानातु ।

इतोऽपि—अस्मादपि स्थानात । चिरप्रवृद्धम्—दीर्घकालवर्धमानम् । वामम्—दक्षिणेतरम् । पुसाम् अशकुनमिदमिति लोकप्रसिद्धम् । योत्स्यामहे—

---

अपनी तलवार उठावे" । जब शब्द सुनकर सबो ने उधर दृष्टि डाली तो वे ही त्रिदण्डी स्वामी राघवाचार्य दीख पडे-जिनके हाथ मे कमण्डलु था, सुवर्ण के चूर्ण की तरह रमणीय रामरज से जिनका सारा शरीर लिप्त था, जिनके ललाट मे कुङ्कुम का तिलक सुशोभित हो रहा था और जिनका विशाल वक्ष-स्थल तुलसी की माला से विकसित हो रहा था । आते ही स्वामी जी अपनी दायी भुजा उठाकर गम्भीर स्वर से पुन कहने लगे ।

"वीर ! अब भी आप लौट जायँ, यवनो के साथ आपकी पुरानी शत्रुता है । औरङ्गजेब का विश्वास नही करना चाहिये । मराठे सैनिक दि[illegible]

युध्यते, तद् योत्स्यामहे। [ विचार्य ] युध्यन्ताम्। राजपुत्रदेशीया युद्धकुशलाश्चेन्महाराष्ट्रा अपि दुर्बलेन करेण न वहन्ति चन्द्रहासम्। युद्धे प्राणांस्त्यक्ष्यथ, ततोऽपि मार्तण्ड-मण्डलं भित्त्वा स्वर्गमार्गमाकुलयिष्यथ। यदि विजेष्यध्वे, ततोऽपि लोकद्वये कीर्त्यां कीर्तिं धर्मरक्षापुण्यञ्च लप्स्यध्वे। अत्र कुक्कुट-मेदो-मेदस्वि-तुन्द-तुन्दिलस्य, वारुणी-व्याघूर्णित-नयनस्य अवरङ्गजीवस्य गृहावग्रहणी-घर्षणेन। आ! नावलोकयितुं शक्नोमि॥ यो महाराष्ट्र-मण्डल-चक्रवर्ती, स एवाद्य दिल्लीकलङ्कस्य करप्रदः भवन्॥ धर्म-धारि-धौरेय पातकपुञ्ज-पतयालुं प्रेक्षितुं पथिकः। हर-कलित-भवानी-करवालोऽपि जाल्मस्य

---

गद्ग्रामयिष्यामः। स्वस्यापि धर्मकोटौ निक्षेप इति शिवराजभृत्येष्वन्यतम इति विज्ञातं स्यात्, साधुतास्पदञ्च प्रकटितं स्यादिति विचार्य—आह युद्ध्यन्ताम्। सर्वत्रिङिति कर्तृपदम्। दुर्बलेन—वलशून्येन। आकुलयिष्यथ—शोभयिष्यथ। लोकद्वये—इहामुत्र च। कीर्त्याम—कीर्तनीयाम्, गेयामिति यावत्। कीर्तिम्—यशः। धर्मरक्षाया—वैदिकधर्मरक्षणात् तस्य, पुण्यम्—धर्मम्। कुक्कुटमेदोभि—चरणायुधमांसादिभिः, मेदस्विना—चिक्कणेनोन्नतेन च, तुन्दनतुन्दिलस्य—बृहत्कुक्षेः। वारुण्या—मदिरया, व्याघूर्णिते—चाञ्चल्यमुपयाते, न यने, यस्य तस्य। गृहावग्रहण्या—देहल्या, घर्षणेन—घट्टनेन। करप्रद—राजस्वसमर्पक। पातकपुञ्ज-पतयालुम्—अधोनिपतनशीलम्। प्रेक्षितुम्—द्रष्टुम्।

---

हुए हैं। साथ ही, मेरी बायी आँख भी फडक रही है। अत यहाँ से भी आप अपनी राजधानी को लौट चले। यदि दिल्ली-सम्राट् औरंगजेब की आज्ञा पाकर जयपुर-नरेश युद्ध करने को उद्यत होते है तो युद्ध करेंगे। [ सोचकर ] युद्ध करें। यदि राजपूताने के निवासी युद्ध-कुशल होते है तो मराठे भी कमजोर हाथो से अपने खड्ग नही पकडने वाले है। यदि युद्धमे आप लोग मर भी जाते है तब भी सूर्यमण्डल का भेदन कर आप लोग स्वर्ग-मार्ग मे ही उथल-पुथल मचायेंगे (नरक मे नही)। यदि विजय हुई तो इहलोक तथा परलोक मे गान करने योग्य यश एवम् धर्मरक्षणजन्य पुण्य की प्राप्ति होगी। मुर्ग-मुसल्लम् खाने से मोटी तोन्दवाले और मदिरापान के कारण चक्कर काटती हुई आँखो वाले औरङ्गजेब की देहली पर माथा रगडने का क्या फल होगा? अहा हा! अब देखा नही जाता। जो महाराष्ट्रदेश के सम्राट् हैं वे दिल्लीकलङ्क औरङ्ग-

पाटच्चर-परिपन्थिनोऽग्रे विनय दर्शयिष्यति !! हा दैव ! विचित्रा ते गति ।"

तदाकर्ण्य क्षण सर्वे चित्र-लिखिता इव नीरवा सवृत्ता । परतो महाराष्ट्रपतिरवादीत्–नवीन-सन्यासिन् ! हृदयग्राहि ब्रूषे। परन्तु कथय, यदि भारतीयाना वैदिक-धर्मावलम्बिनामेव मासैर्मासलीक्रियेत भारत-वसुमती, तत् कि न भवति पापम् ?'

राघवाचार्य —पाप कस्य ? यो विरोधिना पक्षमवलम्ब्य स्वबन्धूञ्जिघासति, यत्कुलजा यवनाना श्यालत्वे श्वशुरत्वे च प्रतिष्ठा मन्वते तस्य । न त्वेतस्य, य स्वधर्म रक्षितु द्विषतो रुणद्धि । [ नत सर्वेपु क्षण

---

पथिक –पान्थ । जाल्मस्य–धूर्तस्य । पाटच्चरपरिपन्थिन –लुण्ठकस्य शत्रो । विनयम्–नम्रताम् ।

नीरवा –नि शब्दा । नवीनसन्यासिन् !–अचिरगृहीतसयास ! चिरान्न धर्मो विचारित इत्येव ब्रूष इति हार्दम् । हृदयग्राहि–मनोहारि, क्रियाविशेपणम् । मासलीक्रियेत–पुष्टा क्रियेत । भारतवसुमती–हैन्दववसुन्धरा ।

जिघासति–हन्तुमिच्छति । श्यालत्वे–पत्नीभ्रातृत्वे । श्वशुरत्वे–पत्नीपितृत्वे । द्विषत –शत्रून् । आम्रेडितवान्–द्विस्त्रि कथितवान् । तीर्थानि–

---

जेब को कर देने वाले है ? जो धर्मात्माओ मे श्रेष्ठ है वे आज पापपुञ्ज से पतित यवन को देखनेवाले पथिक है । 'भवानी' जैसे खड्ग को हाथ मे लेकर भी उस धूर्त, गुण्डो के सरदार के आगे झुकने जा रहे है । विधाता ! आपकी कैसी विचित्र विधि है ।"

स्वामी जी की बाते सुनकर थोडी देर के लिये तो सब चित्रवत् स्तब्ध हो गये । किन्तु बाद मे महाराष्ट्रराज ने कहा—"युवक सन्यासी जी ! आप तो जँचने वाली बाते कर रहे है । परन्तु आप ही वतलाये कि यदि वैदिक-धर्मावलम्बी भारतवासियो के मासो से ही यह भारत-भूमि भर जायेगी तो क्या पाप नही ?"

**राघवाचार्य**—पाप किसको लगनेवाला है ? जो शत्रुपक्ष का अवलम्बन कर अपने बन्धुओको भी मारना चाहता है, जिसके कुल के लोग पतित यवनो के साले और श्वसुर वनने मे ही अपनी प्रतिष्ठा समझते है उसको पाप लगेगा,

नीरवेषु पुन ] वीर ! गत-दिवसेऽपि भवन्त कथितवानस्मि, तदेव चाद्याप्याम्रेडितवानस्मि । गच्छाम्यहमधुना तीर्थान्यटितुम्, स्वस्ति भवते, यथा रोचते तथा विधेयम्—[इत्युक्त्वा सपदि शाल-जाले निलिल्ये]

महाराज —( उच्चैर्निश्वस्य ) गगन-गिरेवाऽऽलपितमिदम् । किं कुर्याम् ? स्मार स्मारमिमा गिर स्व-बाल्य-स्वप्नानिव पुनश्चक्षुषोरग्रत इव पश्यामि-यद् यवनदुर्गाणि वशीकृतवानस्मि, सुदूरपर्यन्त देवमन्दिरेषु ध्वजा उड्डीयन्ते, मथुरा-वृन्दावन-वाराणस्यादि-तीर्थेषु निर्भय श्रीमद्भागवत-रामायणादि-कथा घोष्यन्ते, वय दिल्लीमपि आवृतवन्त , कम्बोज-पर्य्यन्त यवना पराजिता —भवानी च स्वयमिव प्रकटीभूय यवन-हतकैर्योद्धु मामुत्साहते । तत् किं व्यर्था एवैते स्वप्ना ?

---

पुण्यस्थलानि । अटितुम्-भ्रमितुम् । शालजाले-वृक्षसमूहे । "अनोकह कुट शाल" इत्यमर । निलिल्ये-निलीन ।

गगनगिरा-नभोवाण्या । उड्डीयन्ते-दाधूयन्ते । घोष्यन्ते-उच्चै कथ्य-न्ते । आवृतवन्त -अवरुद्धवन्त । व्यर्था -निष्प्रयोजना । निग्रहीष्यति-

---

अपने धर्म की रक्षा करने के लिये शत्रु से लडने वालो को नही । [ उसके बाद सबके मौन हो जाने पर पुन ] वीर ! मै कल भी आपसे कह चुका हू और आज भी मैने उसी बात को दुहराया हे । लीजिये, मै तो अब तीर्थयात्रा मे चल रहा हूँ, आपका कल्याण हो ! अब आपको जैसा लगे वैसा करे [ यह कहकर तत्क्षण ही स्वामी जी वृक्षो के पुञ्ज मे अन्तर्हित हो गये ]

महाराज—[ लम्बी सासे भर कर ] यह तो आकाशवाणी जैसी लगती है । क्या करूँ ? इस बात को याद करने पर तो मेरे बाल्यकाल के स्वप्न—मैने यवनो के किलो को जीत लिया हे, मन्दिरो पर काफी दूर तक पताका फहरा रही ह, वृन्दावन तथा वाराणसी आदि तीर्थो मे निर्भयभाव से श्रीमद्भागवत, महाभारत आदि की कथाये सुनाई जा रही है, हम लोगो ने दिल्ली को भी घेर लिया है, कन्नौज (हिन्दकुश के उत्तरी प्रदेश) तक यवनो की पराजय हो चुकी हे—पुन मेरी आँखो के सामने प्रस्तुत जैसे हो चुके है और इधर यह 'भवानी, खड्ग भी स्वय प्रकट सा होकर इन दुष्ट यवनो के साथ लडने के लिये मुझे उत्साहित कर रहा है । क्या मेरे ये स्वप्न व्यर्थ ही हो जायेंगे ? क्या

पाटच्चर-परिपन्थिनोऽग्रे विनय दर्शयिष्यति ॥ हा दैव ! विचित्रा ते गति ।"

तदाकर्ण्य क्षण सर्वे चित्र-लिखिता इव नीरवा सवृत्ता । परतो महाराष्ट्रपतिरवादीत्-नवीन-सन्यासिन् ! हृदयग्राहि ब्रूषे। परन्तु कथय, यदि भारतीयाना वैदिक-धर्मावलम्बिनामेव मासैर्मासलीक्रियेत भारत-वसुमती, तत् कि न भवति पापम् ?'

राघवाचार्य —पाप कस्य ? यो विरोधिना पक्षमवलम्ब्य स्वबन्धूञ्जिघासति, यत्कुलजा यवनाना श्यालत्वे श्वशुरत्वे च प्रतिष्ठा मन्वते तस्य। न त्वेतस्य, य स्वधर्म रक्षितु द्विषतो रुणद्धि । [ तत सर्वेषु क्षण

---

पथिक –पान्थ । जाल्मस्य–धूर्तस्य । पाटच्चरपरिपन्थिन –लुण्ठकस्य शत्रो । विनयम्–नम्रताम् ।

नीरवा –नि शब्दा । नवीनसन्यासिन् !–अचिरगृहीतसयास ! चिरान्न धर्मो विचारित इत्येव ब्रूष इति हार्दम् । हृदयग्राहि–मनोहारि, क्रियाविशेषणम् । मासलीक्रियेत–पुष्टा क्रियेत । भारतवसुमती–हैन्दववसुन्धरा ।

जिघासति–हन्तुमिच्छति । श्यालत्वे–पत्नीभ्रातृत्वे । श्वशुरत्वे–पत्नीपितृत्वे । द्विषत –शत्रून् । आम्रेडितवान्–द्विस्त्रि कथितवान् । तीर्थानि–

---

जेव को कर देने वाले ह ? जो धर्मात्माओ मे श्रेष्ठ ह वे आज पापपुञ्ज से पतित यवन को देखनेवाले पथिक है ! 'भवानी' जैसे खड्ग को हाथ मे लेकर भी उस धूर्त, गुण्डो के सरदार के आगे झुकने जा रहे है । विधाता ! आपकी कैसी विचित्र विधि है ।"

स्वामी जी की बाते सुनकर थोडी देर के लिये तो सब चित्रवत् स्तब्ध हो गये । किन्तु बाद मे महाराष्ट्रराज ने कहा—"युवक सन्यासी जी ! आप तो जँचने वाली बाते कर रहे हे । परन्तु आप ही बतलाये कि यदि वैदिक-धर्मावलम्बी भारतवासियो के मासो से ही यह भारत-भूमि भर जायेगी तो क्या पाप नही ?"

राघवाचार्य— पाप किसको लगनेवाला है ? जो शत्रुपक्ष का अवलम्बन कर अपने बन्धुओको भी मारना चाहता है, जिसके कुल के लोग पतित यवनो के साले और श्वसुर बनने मे ही अपनी प्रतिष्ठा समझते है उसको पाप लगेगा,

वा ? तच्चिन्ता-चक्रेणालम् ! यदि कोपकपायितो रणाङ्गणे बलेन जयसिंहस्यापि शिरस्यसिमसिष्यसि, तन्मन्ये तस्योष्णीष लौह-शिरस्त्र सकवचमङ्ग महोपवेशन दन्तावलञ्च द्वि कृत्वा वसुधा विदार्य कमठ-पृष्ठे रेखा विधास्यसि। यदि च अवरङ्गजीवमरुणेनापाङ्गेनापि निरी-क्षिष्यसे, तत्त मूर्छयिष्यसि। दिल्ली गच्छ वा, परावर्तस्व वा, न भवति ते आशङ्कास्थान किमपि। दिल्ली प्रयात आपत्सु पतितोऽपि कौशलेन प्राप्तोद्धार कुशलेन स्वदेशमायास्यसीति निश्चित वदामि, मा स्म शङ्किष्ठा ब्राह्मण-वचने। यथा रोचेत तथा विधेहि।

[ मुहूर्तसर्वेषु स्तब्धेषु ] माल्यश्रीक—भगवन्! चिर-विचारेण

---

यावत्। घटे-गर्गरे। मुद्र्येत-नियन्त्र्येत। निग्रहकथा-नियन्त्रणवार्ता। चिन्ताचक्रेण-चिन्ताव्रातेन। कोपकषायित-रोषकलुष। असिम्-चन्द्रहा-सम्। असिष्यसि-क्षेप्स्यसि। उष्णीषम्-शिरोवेष्टनम्। लौहम्-आयसम्, शिरस्त्रम्-शीर्षत्राणम्। सकवचम्-सवारवाणम्, महोपवेशनम्-विशाला-सनम्। दन्तावलम्-करिणम्। वसुधाम्-धरणीम्। विदार्य-विभिद्य। कमठपृष्ठे-कच्छपपृष्ठे। रेखाम्-चिह्नम्। अरुणेन-क्रोधरक्तेन। अपाङ्गेन-नेत्रप्रान्तेन। मूर्च्छयिष्यसि-मूर्छित विधास्यसि। आपत्सु-विपत्सु। कौश-लेन-नैपुण्येन। प्राप्तोद्धार-लब्धनिष्क्रमण। कुशलेन-शिवेन। मा स्म-शङ्किष्ठा-शङ्का मा कृथा।

स्तब्धेषु-मौनीप्रायेषु। कुशलनिवर्त्तनम्-क्षेमेण परावृत्तिम्। सश-

---

'कच्छपराज' की पीठ पर भी आपका चिह्न बना डालेगा। यदि औरङ्गजेब के ऊपर आप अपनी कोपारुण दृष्टि भी डाल देगे तो मूर्छित हो जाएगा। चाहे आप दिल्ली जाँय या लौट जाँय, पर मुझे किसी प्रकार की आशङ्का का आधार नही दीखता। यदि दिल्ली जाने पर आप कथञ्चित् आपत्ति-मग्न भी हो जायेंगे तब भी मै निश्चयपूर्वक यह कहता हूँ कि आप अपने कौशल से अपने को उस आपत्ति से बाहर निकाल कर देश लौट आयेंगे ही। मुझ ब्राह्मण की वाणी मे आप सन्देह न करे। तथापि आपको जैसा अच्छा लगे वैसा करे।

[ थोड़ी देर तक सबके चुप हो जाने के बाद ]

माल्यश्रीक—भगवन्! जिस विषय मे पहले ही विचार के बाद

व्यर्थ एव भवानी-समुत्साह ? किमद्य दिल्ली-कलङ्को मा निग्रहीष्यति ? न जाने किं भावि ! दिल्लीं प्रस्थितोऽस्मि। स सन्यासी च निवारयति। अकारण-बन्धुरेष तथ्य ब्रूते—इति निश्चिनोति मे हृदयम् ?

( क्षण सर्वेषु नीरवेषु ) भूषणशर्मा— महाराष्ट्रराज ! यस्य भवतो नामापि श्रुत्वा यवन-रमणीना गर्भा पतन्ति, अवरङ्गजीव च ज्वर इवाऽऽविशति, कस्त निग्रहीष्यति ? यदि गगन-विहारी विहङ्गराज पिञ्जरे निगृह्येत, यदि शार्दूलो वशे क्रियेत, यदि वा नागनाथोऽनन्तो घटे मुद्र्येत, ततोऽपि को जानीते सम्भाव्येन भवतो निग्रह-कथा न

---

स्वायत्तीकरिष्यति, दण्डयिष्यति। अकारणबन्धु—निष्प्रयोजनमित्रम्। तथ्यम—सत्यम।

गर्भा—औदरिका बाला। ज्वर—शरीरताप। गगनविहारी—आकाशचारी। विहङ्गराज—गरुड। पिञ्जरे—पक्षिस्थित्यर्थं निर्मिते लौहादियन्त्रे। शार्दूल—मृगाधीश। नागनाथ—सर्पराज। अनन्त—तन्नामा, शेष इति

---

आज तू दिल्ली का कलङ्क औरङ्गजेब मुझे पकड लेगा ? क्या होने वाला है उसका पता नही लग रहा है ? मै दिल्लीके लिये चल चुका हूँ, पर वे सन्यासी जी वहाँ जाने से मुझे रोक रहे हे। स्वार्थ-हीन बन्धु होने से वे सत्य ही कहते होगे—ऐसा मन कह रहा हे।

भूषण—महाराष्ट्रराज ! आपका नाम भी सुनकर यवनियो के गर्भ गिर जाते हैं, औरङ्गजेब को ज्वर जैसा हो जाता है, फिर आपको कौन पकड सकता है ? भले ही आकाश मे विचरण करने वाले पक्षिराज गरुड को पिजडो मे बन्द कर दिया जाय, सिह को भी वश मे कर लिया जाय, शेषनाग को भी एक-एक छोटे घडे मे मूंद दिया जाय, फिर भी आपके पकडे जाने की बात सोची भी नही जा सकती। यदि क्रुद्ध होकर युद्ध क्षेत्र मे जयसिहके मस्तक पर भी बलपूर्वक अपना खड्ग चलावे तो मैं समझता हूँ कि आपका खड्ग उसकी पगडी, उसके लोहे के टोप ( Helmet ), कवच सहित उसके शरीर, उसके हाथी के पीठ पर के गद्दे और उसके हाथी के भी दो टूक और पृथ्वी को विदीर्ण करता हुए पृथिवी के भार को ढोने वाले

